उ॰ मुपसङ्क्रम्य । एतमानन्दमयमात्मानमुपसङ्क्रम्य । इमाँल्लोकान् कामान्नी कामरूप्यनुसञ्चरन् । एतत्साम गायन्नास्ते । हा३वु हा३वु हा३वु५ ॥ अहमन्न१महमन्न१महमन्नं१ । अहमन्नादो२ऽहमन्नादो२ऽहमन्नादः । अहꣳ श्लो१ककृदहꣳ श्लो१ककृदहꣳ श्लो१ककृत् । अहमस्मि प्रथमजा ऋता-

---

भा॰ प्राधान्येन विनियोगश्चोक्तः । ब्रह्मविषयोपासनानि च । ये च सर्व्वे कामाः प्रतिनियतानेकसाधनसाध्या आकाशादिकार्य्यभेदविषया एते दर्शिताः । एकत्वे पुनः कामकामित्वानुपपत्तिः । भेदजातस्य सर्व्वस्यात्मभूतत्वात् । तत्र कथं युगपद्ब्रह्मस्वरूपेण सर्व्वान् कामानेवंवित्समश्नुत इत्युच्यते । सर्व्वात्मत्वोपपत्तेः । कथं सर्व्वात्मत्वोपपत्तिरित्याह । पुरुषादित्यस्थात्मैकत्वविज्ञानेनापोह्योत्कर्षापकर्षावन्नमयाद्यात्मनोऽविद्याकल्पितान् क्रमेण सङ्क्रम्यानन्दमयान्तान् सत्यं ज्ञानमनन्तं ब्रह्मादृश्यादिधर्म्मकं स्वाभाविकमानन्दमजममृतमभयमद्वैतं फलमापन्न इमाँल्लोकान् भूरादीननुसञ्चरन्निति व्यवहितेन सम्बन्धः । कथमनुसञ्चरन् । कामान्नी कामतोऽन्नमस्येति कामान्नी । तथा कामतो रूपाण्यस्येति कामरूपी । अनुसञ्चरन् सर्व्वात्मनेमाँल्लोकानात्मत्वेनानुभवन् ।

---

आ॰ समन्वयप्रदर्शनेन दर्शितमिदानीं वल्लीसमाप्तिपर्य्यन्तस्य ग्रन्थस्य तात्पर्य्यं फलकीर्त्तनेनाह । सत्यं ज्ञानमित्यादिना ॥ अविद्यात्मकत्वेन द्वैतावभासमनुभवन् विद्वान् सर्व्वस्यात्माहमिति मन्यमा-

उ० ३स्य । पूर्वं देवेभ्योऽमृतस्य ना३भायि । यो मा ददाति स इदेव मा३वाः । अहमन्नमन्नमदन्तमा३द्मि । अहं विश्वं भुवनमभ्यभवां३ । सुवर्णज्योतीः । य एवं वेद । इत्युपनिषत् ॥ ६ ॥ राध्यते विद्युति मानवान् भवत्येको हा३वु य एवं वेदैकञ्च ॥ इति दशमोऽनुवाकः ॥ १० ॥

---

भा० किमेतत्साम गायन्नास्ते । समत्वाद्ब्रह्मैव साम सर्व्वानन्यरूपं गायन् शब्दयन्नात्मैकत्वं प्रख्यापयन् लोकानुग्रहार्थं तद्विज्ञानफलं चातीव कृतार्थत्वं गायन्नास्ते तिष्ठति । हावु हावु हावु अहो इत्येतस्मिन्नर्थेऽत्यन्तविस्मयख्यापनार्थः । कः पुनरसौ विस्मय इत्युच्यते । अद्वैत आत्मा निरञ्जनोऽपि सन्नहमेवान्नमन्नादश्च । किञ्चाहमेव श्लोककृत् । श्लोको नामान्नान्नादयोः सङ्घातस्तस्य कर्त्ता चेतनावान् । अन्नस्यैव वा परार्थस्यान्नादार्थस्य सतोऽनेकात्मकस्य परार्थेन हेतुना सङ्घातकृत् । त्रिरुक्तिर्विस्मयत्वख्यापनार्था । अहमस्मि भवामि । प्रथमजः प्रथमोत्पन्नः । ऋतस्य सत्यस्य मूर्त्तामूर्त्तस्यास्य जगतो देवेभ्यश्च पूर्व्वममृतस्य नाभिर्मध्यं मत्संस्थममृतत्वं प्राणिनामित्यर्थः । यः कश्चिन्मामन्नमन्नार्थिभ्यो ददाति प्रयच्छति अन्नात्मना ब्रवीति

---

था० सोऽणिमाद्यैश्वर्य्यभुजां योगिनां यत्कामावाप्तत्वं कामरूपत्वञ्च ममैवेति पश्यन्नुपभुञ्जन्सर्व्वान् विषयानन्दाननुभव इत्युपचर्य्यते इत्याह । सर्व्वात्मत्वापत्तेरिति । प्रथमजो हिरण्यगर्भोऽप्ययं । श्रुतिस्तावदा-

उ॰ भृगुस्तस्मै यतो विशन्ति तद्विजिज्ञासस्व तन्न्येोदशान्नं प्राणं मनो विज्ञानमिति विज्ञाय तं तपसा द्वादश द्वादशानन्द इति सेषा दशान्नं न निन्द्यात् प्राणः शरीरमन्नं न परिचक्षीतापो ज्योतिरन्नं बहु कुर्वीत पृथिव्यामाकाश एकादशैकादश। न कञ्चनैकषष्टिरेकान्नविंशतिरेकान्नविंशं-

---

भा॰ स इत इत्यर्थः। एवमेवमविनष्टं यथाभूतं मां त्राता भवतीत्यर्थः। यः पुनरन्यो मामदत्वार्थिभ्यःकाले प्राप्तेऽन्नमत्ति तमन्नमदन्तमहमन्नमेव भक्षयन्तं पुरुषं भोजयामि प्रत्यद्मि। अत्राहैवं तर्हि बिभेमि सर्व्वात्मत्वप्राप्तेर्मोक्षादस्तु संसार एव यतो मुक्तोऽप्यहमन्नभूत आद्यः स्यामन्नस्यैव मा भैषीः संव्यवहारविषयत्वात्सर्व्वकामाशनस्यातीत्यायं संव्यवहारविषयमन्नान्नादादिलक्षणमविद्याकृतं विद्यया ब्रह्मत्वमापन्नो विदांसस्य नैव द्वितीयं वस्त्वन्तरमस्ति यतो बिभेति अतो न विभेतव्यं मोक्षात्। एवं तर्हि किमिदमाह अहमन्नमहमन्नमहमन्नाद इत्युच्यते। योऽयमन्नान्नादादिलक्षणः संव्यवहारः कार्य्यभूतः। स संव्यवहार कार्य्यभूतमेव न परमार्थवस्तु। स एवम्भूतोऽपि ब्रह्मनि-

---

व्या॰ दर्शार्थं। देवेभ्यः सर्व्वदिव्यरूपेभ्यः पूर्व्वं विराड्रूपमेवेत्यर्थः। यवेति सोम्यमध्यमपुरुषैकवचनं। पैनःपुन्येनेत्येवं सर्व्वव्याख्यानेषु निपात्य इत्यवतीवि व्याख्यातं। अभिभवामि उपसंहरामीत्यर्थः। ईश्वरात्मत्वाधानेनाहंबाधे द्वैतं यतो नास्ति भयकारणमित्यर्थः।

उ॰ शान्तिः ॥ * ॥ सह नाववतु । सहनौ भुनक्तु । सह वीर्य्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ भृगुरित्युपनिषत् । शन्नो मित्रः ॥ आविद्वत्तारं ॥ ॐ शान्तिः ३ ॥ इति तैत्तिरीयोपनिषत्सम्पूर्णा ॥

भा॰ मित्तो ब्रह्मव्यतिरेकेणासत्त्विति कृत्वा ब्रह्मविद्याकार्य्यं सर्व्वभावस्य स्तुत्यर्थमुच्यते । अहमन्नमहमन्नमहमन्नं । अहमन्नादोऽहमन्नादोऽहमन्नाद इत्याद्यन्तो भयादिदोषगन्धोऽप्यविद्यानिमित्तो विद्योच्छेदात् ब्रह्मभूतस्य नास्तीत्यर्थः विश्वं समस्तं भुवनं भूतैः सम्भजनीयं ब्रह्मादिभिर्भवन्तीति वास्मिन् भूतानीति भुवनमध्यभवामभिभवामि परेणेश्वरेण स्वरूपेण। सुवर्णज्योतिः सुवरादित्यो नकार उपमार्थः । आदित्य इव सकृद्विभातमस्मदीयं ज्योतिर्ज्योतिः प्रकाश इत्यर्थः । इति वल्लीद्वयविहितोपनिषत्परमात्मज्ञानं नाम । तामेतां यथोक्तामुपनिषदं शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा भृगुवत्तपो महदास्थाय ॥ एवं वेद तस्येदं फलं यथोक्तमोमित्युक्तेरिति ॥ इति श्रीपरमहंसपरिव्राजकाचार्य्यस्य शङ्करभगवतः कृतौ तैत्तिरीयोपनिषद्भाष्यं समाप्तं ॥ ॐ तत्सत् ॥

---

व्या॰ नकार इवेत्यर्थः॥ तैत्तिरीयकभाष्यस्य शङ्करस्य दवीयसः । स्फुटार्थबोधिका व्याख्या निरमायि सुटीप्पणी॥ इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीशुद्धानन्दपूज्यपादशिष्यश्रीभगवदानन्दज्ञानविरचिता तैत्तिरीयभाष्यटिप्पणी सम्पूर्णा । ॐ सत् सत् ॥




ॐ तत् सत् ॐ ॥

## ऋग्वेदीयैतरेयोपनिषद्भाष्यं ॥

ऐ॰भा॰ ॥ ॐ नमः परमात्मने ॥ परिसमाप्तं कर्म सहापरब्रह्मविषयविज्ञानेन । सैषा कर्मणो ज्ञानसहितस्य परा गतिरुक्थविज्ञानद्वारेणोपसंहृता । एतत् सत्यं ब्रह्म प्राणाख्यं । एष एको देवः । एतस्यैव प्राणस्य सर्व्वे देवा विभूतयः ।

---

### ऋग्वेदीयैतरेयोपनिषद्भाष्यटीका ॥

आ॰ ॥ ॐ नमो गणेशाय ॥ आत्मा वा इत्यादिना केवलात्मविद्यारम्भस्यावसरं वक्तुं वृत्तं कीर्त्तयति । परिसमाप्तमिति ॥ तत्परिसमाप्तिः कथं गम्यत इत्याशङ्क्याह । सैषेति ॥ परा गतिरिति परं गन्तव्यं प्राप्यं फलमित्यर्थः ॥ उपसंहारमेव वाक्योदाहरणेन दर्शयति । एतदिति ॥ तत्र सत्य सर्व्वेण भोक्त्रेन संयुक्तोऽध्यात्माधिदैवरूपः प्राणः सत्यशब्दवाच्यो भवति प्राणस्वरूपत्वेन वाक्येनोपसंहृतमित्यर्थः ॥ अनेन प्राण एव एकदेव इत्युक्तमित्याह । एष इति ॥ तर्हि वागग्न्यादयो देवाः के इत्याशङ्क्य तस्य वाक्शक्तिः ॥ अथातोऽस्य पुरुषस्येत्यादिना प्राणस्यैव विभूतयो विस्तारा इत्युक्तमित्याह । एतस्यैवेति ॥ एवं सर्व्वात्मकप्राणस्यात्मत्वेन विज्ञानात् कर्म्मसहितात् सर्व्वदेवतात्मकप्राणप्राप्तिलक्षणं फलं प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयोऽसम्भूय देवता अप्येति य एवं वेदेत्यनेन वाक्येनोपसंहृतमित्याह । एतस्येति ॥ तथा च ज्ञानसहितेन कर्म्मणा केवलात्मस्वरूपावस्थानलक्षणमोक्षस्यासिद्धेस्तत्सिद्ध्यर्थं केवलात्मविद्यारम्भस्येदानीमवसर इति भावः ॥ मतान्तरे सर्व्वात्मकसूत्रात्मप्राप्तिव्यतिरिक्तमोक्षस्याभावात्तदर्थं केवलात्मविद्यारम्भो न युक्त इति केषाञ्चिन्मतमुत्थापयति । सोऽयमिति ॥ एतस्यैव विषयादिमतः सस्वरूपत्वेन पुरु-

ॐ तत् सत् ॐ ॥

---

## ऋग्वेदीयैतरेयोपनिषद्भाष्यं ॥

ऐ॰भा॰ ॥ ॐ नमः परमात्मने ॥ परिसमाप्तं कर्म्म सहापरब्रह्मविषयविज्ञानेन । सैषा कर्म्मणो ज्ञानसहितस्य परा गतिरुक्थविज्ञानद्वारेणोपसंहृता । एतत् सत्यं ब्रह्म प्राणाख्यं । एष एको देवः । एतस्यैव प्राणस्य सर्व्वे देवा विभूतयः ।

---

## ऋग्वेदीयैतरेयोपनिषद्भाष्यटीका ॥

व्या॰ ॥ ॐ नमो गणेशाय ॥ आत्मा वा इत्यादिना केवलात्मविद्यारम्भस्यावसरं वक्तुं वृत्तं कीर्त्तयति । परिसमाप्तमिति ॥ सम्यक्परिसमाप्तिः कथं गम्यत इत्याशङ्क्याह । सैषेति ॥ परा गतिरिति परं गन्तव्यं प्राप्यं फलमित्यर्थः ॥ उपसंहारमेव वाक्योदाहरणेन दर्शयति । एतदिति ॥ तत्र सत्यं सर्व्वेण भोक्त्रेण संयुक्तोऽध्यात्माधिदैवरूपः प्राणः सत्यशब्दवाच्यो भवति प्राणस्वरूपमनेन वाक्येनोपसंहृतमित्यर्थः ॥ अनेन प्राण एव एवेत्युक्तमित्याह । एष इति ॥ तर्हि वागग्न्यादयो देवाः के इत्याशङ्क्य तस्य वाक्यशेषः ॥ अथातोऽस्य पुरुषस्येत्यादिना प्राणस्यैव विभूतयो विस्तारा इत्युक्तमित्याह । एतस्यैवेति ॥ एवं सर्व्वात्मकप्राणस्यात्मत्वेन विज्ञानात् कर्म्मसहितात् सर्व्वदेवतात्मकप्राणप्राप्तिलक्षणं फलं प्रत्यागमयो देवतामयो ब्रह्ममयोऽमृतमयोऽसम्भूय देवता अप्येति य एवं वेदेत्यनेन वाक्येनोपसंहृतमित्याह । एतस्येति ॥ तथा च ज्ञानसहितेन कर्म्मणा केवलात्मस्वरूपावस्थानलक्षणमोक्षस्यासिद्धेस्तत्सिद्ध्यर्थं केवलात्मविद्यारम्भस्येदानीमवसर इति भावः ॥ मतान्तरे सर्व्वात्मकसूत्रात्मप्राप्त्यतिरिक्तमोक्षस्याभावात्तदर्थं केवलात्मविद्यारम्भो न युक्त इति केषाञ्चिन्मतमुत्थापयति । सोऽयमिति ॥ एतस्यैव विषयादिमतः सत्यरूपत्वेन पुरु-

ऐ॰भा॰ एतस्य प्राणस्यात्मभावं गच्छन्देवता अप्येतीत्युक्तं। सोऽयं देवताप्ययलक्षणः परः पुरुषार्थः। एष मोक्षः। स चायं यथोक्तेन ज्ञानकर्म्मसमुच्चयेन साधनेन प्राप्तव्यो नातः परमस्तीत्येके प्रतिपन्नास्तान् निराचिकीर्षुरुत्तरं केवलात्मज्ञानविधानार्थमात्मा वा इदमित्याद्याह। कथं पुनरकर्म्म-

---

आ॰ यार्थत्वान्मोक्षत्वं न निर्विषयस्य केवलात्मस्वरूपावस्थानस्येत्याह। एष इति। अयमपि चेन्मोक्षः केवलमात्मज्ञानेनापि साध्यते तदा तदात्मनोऽप्येवमित्याशङ्क्य सविशेषस्य मोक्षस्य सविशेषेणैव साधनेन सिद्धिर्युक्तेत्याह। स चेति। आत्मनः सविशेषत्वेन केवलात्मविद्याया अभावादपि न तस्या हेतुत्वमित्याह। नातः परमिति। सम्मतं पक्षं तन्निराकरणार्थत्वेन केवलात्मविद्यावाक्यमवतारयति। तानिति। केवलात्मज्ञानेति निर्विशेषात्मविषयत्वमकर्म्मनिष्ठत्वं कर्म्माङ्गत्वलक्षणं कर्म्मासम्बन्धित्वञ्च कैवल्यमिह विवक्षितं। नन्वात्मा वा इदमित्यादि कथं केवलात्मविषयं। स इमान् लोकानसृजतेति लोकसृष्टिप्रतीतेः। तस्याश्च सविशेषहिरण्यगर्भकर्तृकत्वेन पुराणेषु प्रसिद्धेः। ताभ्यो गामानयदित्यादिव्यवहारस्यापि लोके सविशेषविषयत्वप्रसिद्धेः। पूर्व्वभाष्योक्तो देवतः श्रुतेः। प्रजापते देहा देवा इत्यत्र प्रजापतिशब्दितस्य हिरण्यगर्भस्य प्रकृतत्वाच्च तस्य तद्विषयत्वस्योचितत्वादात्मशब्दोक्तिरित्यधिकारे पूर्व्वपक्षन्यायेन शङ्कते। कथमिति। सविशेषाविषयत्वे सत्यात्मविद्यायाः कर्म्मासम्बन्धोऽप्यसिद्ध इत्यभिप्रेत्योक्तं। अकर्म्मसम्बन्धीति। आत्मा वा इदमेक एवाग्र आसीदित्यद्वितीयात्मोपक्रमात् एष ब्रह्मैष इन्द्र इत्याद्यनुक्रम्य सर्व्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितमिति प्रज्ञानशब्दितप्रत्यगात्माधिष्ठानत्वेन तद्विवर्त्तेन ब्रह्मशब्दितहिरण्यगर्भादिप्रपञ्चस्याभावमुक्त्वा प्रज्ञानं ब्रह्मेत्यद्वितीयात्मनोपसंहारात् स एतमेव पुरुषं ब्रह्म ततममपश्यदिति मध्ये परामर्शाद्ब्रह्मात्माद्वितीयत्वस्य मानान्तरासिद्धत्वेनापूर्व्वत्वाद् अमुष्मिन् स्वर्गे लोके सर्व्वान् कामानाप्त्वाऽमृतः समभवदिति। स्वर्गशब्दितनिरतिशयसुखात्मकब्रह्मैक्येन स्थितस्य तदन्तर्भूत-

ऐ०भा० सम्बन्धिकेवलात्मविज्ञानविधानार्थ उत्तरो ग्रन्थ इति गम्यते। अन्यार्थानवगमात्। तथाच पूर्वोक्तानां देवानामग्न्यादीनां संसारित्वं दर्शयिष्यति अशनायादिदोषवत्त्वेन। तमशनायापिपासाभ्यामन्ववार्जदित्यादिना। अशनायादिमत् सर्वं संसार एव। परस्य तु ब्रह्मणोऽशनायाद्यत्ययश्रुतेः। भवत्वेवं केवलात्मज्ञानं मोक्षसाधनं न त्वाकर्म्यैवाधिक्रि-

---

आ० वैषयिकसर्वानन्दप्राप्तिलक्षणफलोक्तेः स्तुत्यर्थवादात् स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यतेति प्रवेशोक्तेः। तस्य त्रय आवसथास्त्रयः स्वप्ना इति जाग्रदाद्यवस्थात्रयस्य स्वप्नत्वेन मिथ्यात्वोक्त्युपपत्तेश्च। निर्विशेषाद्वितीयात्मपरत्वावगमेन यश्चान्या ऽर्थान्तरशङ्का ऽनवकाशात्मोक्तादिश्रुतेश्चाध्यारोपापवादाभ्यामज्ञातात्मप्रतिपत्त्यर्थमात्मन्यारोपात् परमात्मैवात्मशब्देन गृह्यत इत्यर्थः। यथेतरेषु श्रुतिवाक्येषु। तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्येवमादिषु परस्यात्मनो ग्रहणं। यथा चेतरस्मिन् लौकिके आत्मशब्दप्रयोगे प्रत्यगात्मैव मुख्य आत्मशब्देन गृह्यते तथेहापि भवितुमर्हति। कुतः। वाक्यार्थदर्शनात्। आत्मशरीरादिरथादुपकरादिरत्यधिकरणसिद्धान्तन्यायेन केवलात्मपरत्वनिश्चयाच्च सविशेषपरत्वमुपपद्यतेत्याह। अन्यार्थेति। यथेष्ट एष मोक्ष इति तथाह। तथा चेति। तथा संसारित्वं दर्शयिष्यतीत्यन्वयः। तं हिरण्यगर्भस्य स्वरूपं वैराजं पिण्डमशनायापिपासाभ्यां संयोजितवानीश्वर इति श्रुत्यर्थः। अशनायादिमत्त्वेऽपि निरतिशयसुखत्वेन देवताभावस्य मोक्षत्वं स्यादित्यत आह। अशनायादिमदिति। अशनायादेर्दुःखनियतत्वान्निरतिशयसुखत्वं तस्यासिद्धमिति संसारित्वमित्यर्थः। यत्र निर्विशेषात्मस्वरूपावस्थानस्य विषयादिरहितत्वेन न मोक्षत्वमिति तदसत्। तस्य योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येतीत्यशनायाद्यत्ययश्रुतेस्तन्नियतदुःखाप्रसक्तेः। एतस्यानन्दो ब्रह्मेति विज्ञानादिति श्रुतस्मरादनुमिन् धर्मे लोके इतीशाप्या-

ऐ०भा० यते। विशेषाश्रवणात्। अकर्मिण आश्रम्यन्तरस्येहाश्रवणात्। कर्म च कृत्वा सप्तमलक्षणं प्रस्तुत्यानन्तरमेवात्मज्ञानं प्रारभ्यते। तस्मात् कर्म्येवाऽधिक्रियते। न च कर्मासम्बन्ध्यात्मविज्ञानं पूर्ववदन्ते उपसंहारात्। यथा कर्मसम्बन्धिनः पुरुषस्य सूर्यात्मना स्थावरजङ्गमादिसर्व्वप्राण्यात्मत्वमुक्तं ब्राह्मणेन मन्त्रेण च सूर्य आत्मेत्यादिना तथैवेह ब्रह्म एष

---

आ० नन्दरूपतावगमात् स्वर्गशब्दस्य सुखसामान्यवाचित्वादनन्ते स्वर्गे लोके ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ता इत्यादिश्रुतिषु ब्रह्मानन्दे स्वर्गशब्दप्रयोगाच्च। तस्य विषयाभावेऽपि पुरुषार्थत्वाभ्युपगमाच्च। परस्य त्विति। एवं विविदिषोरात्मविद्याया मोक्षसाधनत्वमङ्गीकृत्य तस्या अकर्मिनिष्ठत्वनियमरूपं कैवल्यं न सम्भवतीति वदन् संन्यासमाक्षिपति। भवत्विति। विशेषाश्रवणमेव स्फुटयति। अकर्मिण इति। संन्यासिन इत्यर्थः। न केवलं विशेषाश्रवणं किन्तु सन्निधानात्कर्म्मिणः प्रतीतेः कर्मिसम्बन्धित्वनियमश्चावश्यकीत्याह। कर्म च कृत्वेत्यादि। सप्तमलक्षणमिति। तथा च तद्द्वारा कर्मी सन्निहित इत्यर्थः। तस्मादिति। अतो न कर्मत्यागरूपसंन्यासाश्रमोऽस्तीत्यर्थः। एवमात्मविद्यां केवलां कर्मासम्बन्धिनीमङ्गीकृत्य तस्या अकर्मिनिष्ठत्वनियमो निराकृतः। इदानीमङ्गीकारं परित्यजति। न चेति। पूर्वत्र कर्मसम्बन्धिध्यानविषयस्य सर्वात्मत्वोक्तेरेव ब्रह्मेत्यादिनाऽत्रापि सर्वात्मत्वोक्तेश्च लिङ्गेनाऽस्याप्यात्मज्ञानस्य कर्मसम्बन्धित्वानुमानादस्याप्यात्मज्ञानस्य कर्मसम्बन्धित्वमित्यर्थः। तदुक्तवाक्यं विवृणोति। यथेत्यादिना। कर्मसम्बन्धिन इति तस्यैव चेमं लोकमभ्यार्च्छत् पुरुषरूपेण य एष तपतीत्यादिना सूर्यात्मसमुक्ता तस्य सर्वात्मत्वं तस्मात्पुरुषविन्न इत्याचक्षते। एतमेव सन्तमित्यादिना प्राण एष इत्येवं विद्यादित्यन्तेन प्राणो वै सर्वाणि भूतानि चेतनेन चोक्तमित्यर्थः। जगतो जङ्गमस्य तस्थुषः स्थावरस्य सूर्य आत्मेति मन्त्रार्थः। प्रज्ञानेत्रमिति प्रज्ञा-

ऐ०भा० इन्द्र इत्याद्युपक्रम्य सर्व्वप्राण्यात्मत्वं । यच्च स्थावरजङ्गमं सर्व्वं तत् प्रज्ञानेत्रमित्युपसंहरिष्यति । तथाच संहितोपनिषदि एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त इत्यादिना कर्म्मसम्बन्धित्वमुक्त्वा सर्व्वेषु भूतेषु एतमेव ब्रह्मेत्याचक्षत इत्युपसंहरति । तथा तस्यैव योऽयमशरीरः प्रज्ञात्मेत्युक्तस्य यश्चासावादित्य एकमेव तदिति विद्यादित्येकत्वमुक्तमिहापि कोऽयमात्मेत्युपक्रम्य प्रज्ञात्मत्वमेव प्रज्ञानम् ब्रह्मेति दर्शयिष्यति । तस्मान्नाकर्म्मसम्बन्ध्यात्मज्ञानं पुनरुक्तता-ऽनर्थक्यमिति चेत् । कथं प्राणो वा अहमस्म्यृषे इत्यादि ब्राह्मणेन सूर्य्य आत्मेति च मन्त्रेण निर्द्धारितस्यात्मन आत्मा वा इदमित्यादिब्राह्मणेन कोऽयमात्मेति प्रश्नपूर्व्वकं पुनर्निर्द्धारणं पुनरुक्तमनर्थकमिति चेन्न । तस्यैव धर्मा-

---

व्या० प्रदर्शितमस्यैकत्वमित्यर्थः । सर्व्वप्राण्यात्मकेनाप्यस्य कर्म्मसम्बन्ध्यात्म-विषयत्वमिति वदन् सर्व्वात्मत्वं लिङ्गस्य कर्म्मसम्बन्ध्यात्मविष-यत्वमाह । तथा चेति । तथा संहितोपनिषदि चेति चका-रान्वयः । महत्युक्थे बृहतीसहस्राख्ये शस्त्रे एतं प्रकृतमात्मानं ऋग्वेदिनः विचारयन्तीति श्रुत्यर्थः । संहितोपनिषदि प्रज्ञा-त्मेत्युक्तस्यात्मनो यो यश्चासोऽन्यथं पश्येदित्यादिनाऽधमर्थ्येऽवगमया कर्म्मसम्बन्धप्रतीतेस्तस्यापि प्रज्ञात्मत्वोक्त्या च कर्म्मसम्बन्धावग-मात् तज्ज्ञानस्य कर्म्मसम्बन्धित्वमित्याह । तथा तस्यैवेति ॥ प्रज्ञामुपसंहरति । तस्मादिति । प्रज्ञावाद्येव सिद्धान्त्याशङ्का-माशङ्कते । पुनरुक्तेति । तदुक्तवाक्यं विवृणोति । प्राणो वा इत्यादिना । पूर्व्वोत्तरब्राह्मणयोरेकार्थत्वे वक्ष्यमाणमपि प्राणा-त्मविषयं स्यात् निर्द्धारितमिति पुनरुक्तमित्यर्थः ॥ य एव शङ्कां परिहरति । न तस्यैवेति । तमेव प्रश्नपूर्व्वकं विवृणोति । कथ-मित्यादिना । जगत्सृष्टीति स इमाल्लोकानसृजतेत्यादिश्रव-

ऐ॰भा॰ ऽनधिकृतार्थी वा न परमार्थतात्मविज्ञाने फलादर्शने क्रियानुपपत्तेः। यदुक्तं कर्म्मिण एव चात्मज्ञानं कर्म्मसम्बन्धि चेत्यादि तन्न। परं ह्याप्तकामं सर्व्वसंसारदोषवर्जितं ब्रह्माहमस्मीत्यात्मत्वेन विज्ञाते कृतेन कर्त्तव्येन वा प्रयोजनं आत्मनोऽपश्यतः फलादर्शने क्रिया नोपपद्यते। फलादर्शनेऽपि नियुक्तत्वात् करोतीति चेन्न। नियोगाविषयात्मदर्शनादिष्टयोगमनिष्टवियोगं चात्मनः प्रयोजनं पश्यंस्तदुपायार्थी यो भवति स नियोगस्य विषयो दृष्टो लोके न तु तद्विपरीतनियोगाविषयब्रह्मात्मदर्शी। ब्रह्मात्म-

---

आ॰ सोऽपि कर्म्मानधिकृतात्वापदृष्टादिविषयत्वमेवेत्याह। अनधिकृतेति। तस्मान्नाकर्म्मिनिष्ठैव विद्या किन्तु कर्म्मिनिष्ठा तत्सम्बन्धिनी चेति स्थितं। तदेतत्सिद्धान्ती परिहरति। नेति। एवं हि कर्म्मिनिष्ठा विद्या स्यात्। यदि विदुषोऽपि कर्म्मानुष्ठानं स्यात्तदपि प्रयोजनार्थितया वा स्यात्काम्य इव नियोगबलाद्वा-प्राभाकरमत इव नित्यकर्म्मणि। तन्नाद्य इत्याह। परमार्थेति। सङ्क्षेपवाक्यं विस्तरनिषेधार्थ्योऽध्याहारपूर्व्वकं भजते विवृणोति। यदुक्तमित्यादिना। कर्म्मसम्बन्धि चेति कर्म्माङ्गोक्त्या-द्याश्रयमित्यर्थः। परमार्थेति वाक्यार्थं विवृणोति। परमिति। धर्म्मायर्थमनर्थनिवृत्त्यर्थं वा कर्म्म स्यात्तोभयमपीति वक्तुं विशेषणद्वयं दोषपदेन रागद्वेषाभावेनापि प्रवृत्त्यभावं सूचयति। अननुष्ठितकर्म्मणाप्यसम्बन्धे कर्त्तव्ये न सम्बन्धोऽदूरापास्त इति वक्तुं कृतेनेत्युक्तं। द्वितीयं शङ्कते। फलादर्शनेऽपीति। ममेदं कार्य्यमिति बोद्धा हि नियोगस्य विषयो नियोज्यः कार्य्यं स्वकीयत्वप्रकाशस्य तज्ज्ञानफलार्थिनः। न ह्यात्मनोऽमज्ञिवशालिनो ममेदमिति बुद्धिर्भवति यतो न तस्य नियुक्तत्वमित्याह। न नियोगेति। तदेवोपपादयति। इष्टेति। ममेदं कार्य्यमिति बोधाभावेऽपि चेन्नियुज्येत तर्हि राजसूयादिकं ब्राह्मणादिना कर्त्तव्यं स्या-

ऐ० भा० तद्विदपि सन् चेन्नियुज्येत नियोगाविषयोऽपि सन्न कश्चिदनियुक्त इति सर्व्वं कर्म्म सर्व्वेण सर्व्वदा कर्त्तव्यं प्राप्नोति। तच्चानिष्टं। न च स नियोक्तुं शक्यते केनचित्। आम्नायस्यापि तत्प्रभवत्वात्। न हि स्वविज्ञानोत्थेन वचसा स्वयं नियुज्यते। नापि बहुवित् स्वाम्यविवेकिना भृत्येन। आम्नायस्य नित्यत्वे सति स्वातन्त्र्यात् सर्व्वान् प्रति नियोक्तृत्वसामर्थ्यमिति चेन्न। उक्तदोषात्। तथापि सर्व्वेण सर्व्वदा विशिष्टं कर्म्म कर्त्तव्यमित्युक्तो दोषोऽपरिहार्य्य एव। तदपि शास्त्रे-

---

व्या० दग्निष्टोमादिकञ्च सर्व्वदा कर्त्तव्यं स्यान्निर्निमित्तत्वाविशेषादित्याह। तच्चानिष्टमिति। न कश्चिन्न नियुक्त इति नञ्द्वयेन सर्व्वोऽपि नियुक्त एवेत्यर्थः। किञ्च नियोक्ताप्यस्य किं यः कश्च पुरुषो देवो वा। आद्ये विदुष ईश्वरात्मत्वाभावात् सर्व्वं नियोक्तृत्वेन स्वनियोज्येनास्य नियोज्यत्वं स्यात्तच्च विरोधान्न सम्भवतीत्याह। न च स इति। तस्यैव सर्व्वनियोक्तृत्वादित्यर्थः॥ नन्वन्यस्य नियोक्तृत्वाभावेऽप्याम्नायेन विद्वान्नियोज्यः स्यादिति द्वितीयमाशङ्क्य तस्याम्नायस्येश्वरज्ञानपूर्व्वकत्वात् स्ववचनेन स्वस्य नियोज्यत्वमेकत्र कर्तृकर्म्मविरोधान्न सम्भवतीत्याह। आम्नायस्यापीति॥ किञ्च व्याकरणादेस्तत्कर्त्रपाणिन्यादिभ्य एकदेशार्थविषयत्वदर्शनेन वेदस्यापीश्वरजन्यस्येश्वरज्ञैकदेशविषयत्वेनाल्पत्वात्तदप्यधिकेश्वरनियोक्तृत्वमयुक्तमित्याह। नापि बहुविदिति॥ अविवेकेनेत्यल्पज्ञेनेत्यर्थः। अपेतज्ञत्वाद्वा तस्याविवेकित्वं भृत्येन न नियुज्यत इत्यनुषङ्गः॥ ननु वेदस्येश्वरज्ञानपूर्व्वकत्वपक्षे पूर्व्वोक्तदोषानुषङ्गेऽपि तस्य नित्यत्वपक्षे नायं दोष इति शङ्कते। आम्नायस्येति। तस्याऽचेतनस्य नियोक्तृत्वं न सम्भवति। तस्य चेतनधर्म्मत्वादित्युत्तरमाह। नेति॥ नियोक्तृत्वमभ्युपेत्यापि दोषमाह। उक्तदोषादिति॥ तदेव विवृणोति। तथापीति॥ अनियोज्यस्यापि चेत् कर्त्तव्यं विदुषस्तर्हि विशिष्टं विहितं कर्म्म सर्व्वेण

ऐ॰भा॰ स्येति चेत्। यथा कर्मकर्त्तव्यता शास्त्रेण कृता तथा तद्वदात्मज्ञानं तस्यैव कर्मिणः शास्त्रेण विधीयत इति चेत्। न। विरुद्धार्थबोधकत्वानुपपत्तेः। न ह्येकस्मिन् कृताकृततासम्बन्धित्वं तद्विपरीतत्वस्य बोधयितुं शक्यं। शीतोष्णतामिवाग्नेः। न चेष्टयोगचिकीर्षात्मनोऽनिष्टवियोगचिकीर्षा च शास्त्रकृता सर्वप्राणिनां तद्दर्शनाच्छास्त्रकृतत्वे चेत्तदुभयं गोपालादीनां न दृश्येत अशास्त्रज्ञता तेषां। यद्धि स्वतोऽप्राप्तं तच्छास्त्रेण बोधयितव्यं। तच्चेत् कृतकर्त्तव्यता-

---

व्या॰ सर्वदापि कर्त्तव्यसद्भावे हेत्वभावादित्यर्थः। यथाहि ब्रह्मात्मज्ञानस्य कर्मकर्त्तव्यतायाश्च शास्त्रेण कृतत्वादुभयोरपि शास्त्रयोः प्रामाण्याविशेषात् कदाचिदात्मज्ञानं कदाचित् कर्मानुष्ठानञ्च स्यादिति शङ्कते। तद्यीति। तदेव विवृणोति। यथेति। स्वाभाविककर्त्तृत्वबोधेन सहोत्पन्नेनैव कर्तृत्वबोधबाधनान्न पुनः शास्त्रेण कर्तृत्वबोधः सम्भवतीत्याह। नेति। कृताकृतत्वम् कृतमिति इदानीमकृतं इत्यपरं कर्त्तव्यं यदुच्यते। एवं तावन्नियोगाविषयात् कर्त्तात्मदर्शित्वाद् विदुषः प्रयोजनार्थित्वाभावाच्च न कर्मेत्युक्तं। इदानीं स्वत इष्टानिष्टसंयोगवियोगरूपप्रयोजनार्थिताभावेऽपि विदुषः स्वर्गकामो यजेतेति शास्त्रेणैव साध्यत इत्याशङ्क्य स्वभावतः प्राप्तप्रयोजनार्थित्वानुवादेन तदुपायमात्रं शास्त्रेण बोध्यते न तु साध्यते। अन्यथा अशास्त्रज्ञानां तदर्थिता न स्यादित्याह। न चेति। अत्र चिकीर्षाशब्देन फलेच्छामात्रमुच्यते न तु कर्त्तुमिच्छा फले तदयोगादिति। ननु कृताकृतसम्बन्धित्वं तद्विपरीतस्य विरुद्धत्वान्न बोधयति चेच्छास्त्रं तर्हि कृताकृतासम्बन्धित्वमेव मा बोधीदित्याशङ्क्य तस्य मानान्तरासिद्धत्वेनावश्यं शास्त्रबोध्यत्वे वक्तव्ये तद्विपरीतस्य मानान्तरसिद्धस्य न शास्त्रबोध्यत्वं विरुद्धत्वादित्याह। यद्धीति। तच्चेदिति निश्चयार्थे कृते सतीदं कृतमिदं कर्त्तव्यमिति भावविरोधीत्यर्थः। कर्त्तव्यता

ऐ॰भा॰ विरोधादात्मज्ञानं शास्त्रेण कृतं कथं तद्विरुद्धकर्त्तव्यतां पुनरुत्पादयेच्छीततामिवाग्नौ तम इव भानौ। न बोधयत्येवेति चेन्न। स म आत्मेति विद्यादात्मज्ञानं ब्रह्मेति चोपसंहारात्। तदात्मानमेवावेत् तत्त्वमसीत्येवमादिवाक्यानां तत्परत्वात्। उत्पन्नस्य ब्रह्मात्मविज्ञानस्याबाध्यमानत्वादनुत्पन्नं भ्रान्तं वेति शक्यं वक्तुं। त्यागेऽपि प्रयोजनाभावस्य तुल्यत्वमिति चेत्। न। नाकृतेनेह कश्चनेति स्मृतेः। य आत्मविद्विदित्वा ब्रह्म व्युत्थानमेवमेव कुर्या-

---

व्या॰ तत्त्यागमित्यर्थः। विध्यभावेन वेदान्तानामसहायात्मबोधकत्वमित्याशङ्क्य पुरुषस्य कर्त्तव्याभिमुखीकरणार्थत्वाद्विधेरिवात्मज्ञानाभिमुखीकरणार्थं विधिस्वरूपस्यार्थवादस्य सत्त्वात् स्वरूपबोधकस्य तत्परत्वाच्छ्रुतानि तथात्वे नैवमित्युपसंहाराच। न बोधयत्येवेत्यादिना उपसंहारादित्यन्तेन। तत्स्वरूपविषयमात्मा वा इदमित्याद्युपक्रमादितात्पर्यलिङ्गं सूचयति। ज्ञानोत्पत्त्यनुवादिकाया एव श्रुतेर्बलाद्ज्ञानोत्पत्तिशङ्का न कार्य्येत्याह। तदात्मानमिति। तदिति जीवस्वरूपेणावस्थितं ब्रह्मेत्यर्थः। छान्दोग्यवाक्यमप्येवमेवेति वदन् श्रुतिसामान्यन्यायं दर्शयति। तत्त्वमसीति। अनेन तत्रस्य निमित्तविधि वाक्यद्वयेऽप्युपलक्ष्यते। अयमात्मा ब्रह्मेत्यादिशब्दार्थः। कर्त्तात्मबोधककर्मकाण्डविरोधादुत्पन्नमपि ज्ञानं भ्रान्तमित्याशङ्क्य तस्य यथा प्राप्तकर्त्रात्मानुवादेनोपायमात्रपरत्वाद्वस्तुपरवेदान्तजन्यज्ञानबाधकत्वमित्याह। उत्पन्नस्येति। नानुत्पन्नमिति वाक्यश्रवणानन्तरमकर्त्रात्माहमिति ज्ञानस्यानुभवसिद्धत्वादहमकर्त्तेति विपरीतज्ञानादर्शनाच नोभयं वक्तुं शक्यमित्यर्थः। विदुषः प्रयोजनस्याभावान्न कर्मणि प्रवृत्तिरित्युक्तं। तर्हि तत्त्यागेऽपि प्रयोजनाभावात् तत्रापि न प्रवृत्तिः स्यादिति शङ्कते। त्यागेऽपीति। तस्य विदुषः कृतेन कर्मणार्थो नास्ति। अकृतेन कर्माभावेनापीह लोकेऽर्थो नास्तीति गीतासु स्मरणात्।

ऐ॰भा॰ दिति । तेषामप्येष समानो दोषः । प्रयोजनाभाव इति चेन्न । अक्रियामात्रत्वाद्व्युत्थानस्य । अविद्यानिमित्तो हि प्रयोजनस्य भावो न वस्तुधर्म्मः । सर्व्वप्राणिनां तद्दर्शनात् । प्रयोजनतृष्णया च प्रेर्य्यमाणस्य वाङ्मनःकायैः प्रवृत्तिदर्शनात् । सोऽकामयत जाया मे स्यादित्यादिपुत्रवित्तादिपाङ्क्तलक्षणं काम्यमेवेति । उभे ह्येते साध्यसाधनलक्षणे एषणे एवेति वाजसनेयिब्राह्मणेऽवधारणात् । अविद्याकामदोषनिमित्ताया वाङ्मनःकायप्रवृत्तेः पाङ्क्त-

---

व्या॰ त्यागेऽपि प्रयोजनाभावस्य तुल्यत्वमिति चेदित्यन्वयः । अज्ञानमेव विवृणोति । न चाऽऽहरिति । कर्म्मत्यागस्य व्यापारात्मकत्वे व्यापारस्य क्लेशात्मकत्वात्तदनुष्ठानं प्रयोजनापेक्षितं स्यात् । न त्वेतदस्ति किन्तु क्रियाभावमात्रमौदासीन्यरूपं । तस्य च स्वाभाविकरूपत्वात्स्वत एव प्रयोजनत्वान्न प्रयोजनान्तरापेक्षत्वमिति परिहरति । नेति । त्यागस्यान्यव्यापारहेतुजन्यत्वाभावान्न व्यापारत्वमिति वक्तुं अन्यत्र व्यापारहेतुमाह । अविद्येत्यादिना । यद्वा विदुषः कथं यत्नं विना व्युत्थानमौदासीन्यमात्रेण सिद्ध्यतीत्याशङ्क्य क्रियाहेत्वभावात् क्रियाभाव इति वक्तुं तद्धेतुमाह । प्रयोजनस्य भाव इति । प्रयोजनस्य तृष्णेत्यर्थः । तस्या वस्तुधर्म्मत्वे विदुषोऽपि तृष्णा स्यादिति तन्निषेधति । न वस्तुधर्म्म इति । न वस्तुस्वभाव इत्यर्थः । वस्तुधर्म्मत्वे हि विदुषामविदुषाञ्च सुषुप्तिमूर्च्छितादीनां सा स्यान्न त्वेतदस्ति । तत्र हेतुमाह । सर्व्वेति । तद्दर्शनादिति पाठे वस्तुस्वभावाज्ञानिनां गोपालादीनामपि तृष्णादर्शनान्न वस्तुधर्म्म इति कथञ्चिद्योज्यं । तृष्णाया अविद्याजन्यत्वमुक्त्वा तस्या व्यापारहेतुत्वमाह । प्रयोजनेति । दर्शनादिति पञ्चमी । अविद्याकामदोषनिमित्ताया इत्युपरत्र हेतुत्वेन सम्बध्यते । न केवलं दर्शनमेव किन्तु श्रुतिरप्यस्तीत्याह । सोऽकामयतेत्यादिना । उभे ह्येते एषणे एवेति

ऐ॰भा॰ लक्षणाया विदुषोऽविद्यादिदोषाभावादनुपपत्तिः। अभावादक्रियामात्रं व्युत्थानं न तु यागादिवदनुष्ठेयरूपं भावात्मकं तच्च विद्यावत् पुरुषधर्म्म इति न प्रयोजनमन्वेष्टव्यं। न हि तमसि प्रवृत्तस्योदिते आलोके यद्गर्त्तपङ्ककण्टकाद्यपतनं तत्किंप्रयोजनमिति प्रश्नार्हं व्युत्थानं तर्ह्यर्थप्राप्तत्वान्न चोदनार्थं इति। गार्हस्थ्ये चेत् परब्रह्मविज्ञानं जातं तत्रैवास्त्वकुर्व्वत आसनं न ततोऽन्यत्र गमनमिति चेन्न। कामप्रयुक्तत्वाद्गार्हस्थ्यस्य। एतावान् वै काम इति। उभे ह्येते

---

आ॰ यावत्येन च पुत्रवित्तादि काम्यमेवेति मन्त्रसन्दर्भाच्चायेऽवधारणा-दित्यन्वयः। पाङ्क्तलक्षणमिति जायापुत्रदैवमानुषवित्तद्वयकर्म्म-भिः पञ्चभिर्योगात् पाङ्क्तलक्षणं कर्म्मेत्यर्थः। उभे इत्यस्यार्थमाह। साध्यसाधनेति। एवं क्रियाहेत्वभावदर्शने तदभावादेव विदुषः क्रियाभावोऽयत्नसिद्ध इत्याह। अविद्याकामेति। पाङ्क्तलक्षणाया इति जायापुत्रदैववित्तमानुषवित्तकर्म्मभिः पञ्चभिर्लक्ष्यते साध्यत इति वैदिकी प्रवृत्तिः पाङ्क्तलक्षणेत्युच्यते। पञ्चसङ्ख्यायोगेन गौण्या वृत्त्या पङ्क्तिच्छन्दःसम्बन्धोपचारात् पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञ इति श्रुतेरित्यर्थः। पाङ्क्तलक्षणाया इत्यनन्तरमनुपपत्तिरि-त्यनुषङ्गः। व्युत्थानमित्यनन्तरमयत्नसिद्धमिति शेषः। एवञ्च क्रियाभावस्यौदासीन्यात्मकस्य पुरुषस्वभावत्वेनायत्नसिद्धत्वे सति न प्रयोजनापेक्षेत्याह। तच्चेति। पुरुषधर्म्म इति पुरुषस्वभाव इत्यर्थः। अज्ञानकार्य्यस्याज्ञाननिवृत्तौ अयत्नत एव निवृत्तिरि-त्यत्र दृष्टान्तमाह। न हीति। व्युत्थानस्य पुंव्यापाराधीनत्वाभावे विधेरवकाशाद्विदुषो नियमेन व्युत्थानं न सिद्ध्यतीति शङ्कते। व्युत्थानं तर्हीति। ततोऽन्यत्र गमनमिति पारिव्राज्यस्वीकार इत्यर्थः। किं गार्हस्थ्यशब्देन गृहस्थोऽहमित्यभिमानपुरःसरं पुत्र-वित्ताद्यभिमान उच्यते उत गृहस्थलिङ्गधारणं। नाद्यः। विद्यया ऽविद्याकार्य्याभिमाननिवृत्तेरित्याह। न कामेति। न द्वितीयः।

ऐ०भा० गृहस्थ एवेत्यवधारणात् । कामनिमित्तपुत्रवित्तादिसम्बन्धनियमाभावमात्रं । न हि ततोऽन्यत्र गमनं व्युत्थानमुच्यते । अतो न गार्हस्थ्ये एवाकुर्वत आसनमुत्पन्नविद्यस्य । एतेन गुरुशुश्रूषातपोरण्यप्रतिपत्तिर्विदुषः सिद्धा । अत्र केचिद्गृहस्था भिक्षाटनादिभयात् परिभवाच्च त्रस्यमानाः सूक्ष्मदृष्टितां दर्शयन्त उत्तरमाहुः । भिक्षोरपि भिक्षाटनादिनियमदर्शनात् देहधारणमात्रार्थिनो गृहस्थस्यापि साध्यसाधनैषणोभयविनिर्मुक्तस्य देहमात्रधारणार्थ-

---

आ० लिङ्गेऽप्यभिमानरहितस्य तुल्यत्वात् । न चैवं पारिव्राज्यलिङ्गेऽप्यभिमानाभावात्तस्याप्यसिद्धिरिति वाच्यं । सर्वतोऽभिमानराहित्येन सर्वसम्बन्धराहित्यं हि परमहंसपरिव्राजोपलक्षणं न लिङ्गधारणं । न लिङ्गं धर्मकारणमिति स्मृतेः । तथा च लिङ्गेऽप्यभिमानशून्यस्य पारिव्राज्यं सिद्धमित्याह । कामनिमित्तेति । गार्हस्थ्य इत्यभिमानात्मक इत्यर्थः । तर्हि गुरुशुश्रूषादावप्यभिमानी न स्यादित्याशङ्क्येष्टापत्तिरित्याह । एतेनेति । ननु पुत्रादिसम्बन्धनियमरहितस्यापि मन्यते देहधारणार्थिनो भिक्षोः परिग्रहव्यावर्त्तनार्थो भिक्षाटनादिरेवेति नियमोऽङ्गीक्रियते । तथा गृहस्थस्याप्यभिमानशून्यस्यैव सतो देहधारणार्थं गृहे एवावस्थानं न भिक्षुत्वविरोधादिति शङ्कते । अत्र केचिद्गृहस्था इति । तेषां न न्यायो मूलं किन्तु इष्टमातापित्रादिकमेव मूलमित्युपहसन्नाह । भिक्षाटनादीति । परिभवः पामरैः क्रियमाणस्तिरस्कारः । सूक्ष्मेति काक्वा व्यतिरेकेण स्थूलदृष्टय इत्यर्थः । भिक्षाटनादीत्यादिशब्देन प्राक्प्रणीतमर्यादितमित्यादयो गृह्यन्ते । देहधारणमात्रार्थिनो भिक्षोरिति पूर्वेणान्वयः । सिद्धान्ती तस्यैवम्भूतस्य स्त्रीपरिग्रहोऽस्ति वा न वेति विकल्प्याद्ये दूषणमाह । न स्येति । मध्यमविशेषशब्देन स्त्रीविशेषो गृह्यते । न द्वितीयः । स्त्रीपरिग्रहवत एव मध्यमपरिग्रहाधिकारात् । तदभावेऽर्थाद्-

ऐ॰भा॰ अशनाच्छादनमात्रमुपजीवतो गृह एवास्त्वामनमिति। न स्वगृहविशेषपरिग्रहनियमस्य कामप्रयुक्तत्वादित्युक्तोत्तरमेतत्। स्वगृहविशेषपरिग्रहाभावे च शरीरधारणमात्रप्रयुक्ताशनाच्छादनार्थिनः स्वपरिग्रहविशेषाभावेऽर्थाद्भिक्षुत्वमेव। शरीरधारणार्थायां भिक्षाटनादिषु प्रवृत्तौ यथा नियमो भिक्षोः शौचादौ च तथा गृहिणोऽपि विदुषोऽकामिनोऽस्तु नित्यकर्मसु नियमेन प्रवृत्तिर्यावज्जीवादिश्रुतिनियुक्तत्वात् प्रत्यवायपरिहारार्थेति। एत-

---

व्या॰ स्वपरिग्रहनिवृत्तेः। तदभावे प्रकारान्तरेण जीवनासिद्धेरर्थाद्भिक्षाटनादिनियम एव सिद्ध इत्याह। स्वगृहेति। न च पुत्रादिपरिग्रहहीनेन जीवनमस्तीति प्रकृतं। तेऽपि स्वत्वेन सम्बन्धाभावे स्वकीयस्यापि परकीयद्रव्यतुल्यत्वेन तथापि भिक्षुत्वनियमादिति। अन्ये तु भिक्षोरपि भिक्षाटनादौ सप्तागारान् सङ्कल्पानियादिनियमः। शौचादौ च चातुर्गुण्यादिनियमश्च प्रत्यवायपरिहारार्थं यथेष्यते तथा यावज्जीवादिश्रुतिवशात् प्रत्यवायपरिहारार्थं नित्यकर्मस्वपि नियमेन प्रवृत्तिरित्याहुस्तदनुवदति। शरीरधारणार्थायामिति। अकुर्वत एव गृहेऽवस्थानं पूर्वमते प्रसक्तं। अस्मिन्मते तन्निमित्ताद्यनुष्ठानमपि कर्त्तव्यमिति शङ्कते। तथेति। पूर्वं स परिग्रहत्यागरूपो भिक्षाटनादिविषयो दृष्टशरीरधारणप्रयोजनो नियमो दृष्टान्तत्वेनोक्त इह तु स भिक्षाटनादिगतसप्तागारत्वादिविषयो दृष्टार्थो दृष्टान्तत्वेनोक्त इति भेदं द्योतयति। एतदिति। तस्य सर्वनियोक्त्रीश्वरात्मत्वाच्च न नियोज्यत्वमित्याद्युक्तमित्याह। अप्रयत्नेति। तर्हि तच्छ्रुतेरप्रामाण्ये भिक्षाटनादिनियमविधेरपि तत् स्यादित्यभिप्रायेण शङ्कते। यावज्जीवेति। अविदुषि नियोज्ये तत् प्रामाण्यं घटत इति मोक्षादोष इत्याह। नेति। तदुक्तप्रतिबन्धी परिहर्तुमनुवदति। यत्त्विति। द्योतयति। तत्प्रवृत्तेरिति। आचमनविधिनाऽप-

ऐ॰भा॰ न्नियोगाविषयत्वेन विदुषः प्रत्युतासङ्गनियोज्य-
त्वाच्चेति । यावज्जीवादिनित्यचोदनानर्थक्यमिति चेन्न ।
अविद्वद्विषयत्वेनार्थवत्त्वात् । यत्तु भिक्षोः शरीरधारण-
मात्रप्रवृत्तस्य प्रवृत्तेर्नियतत्वं तत् प्रवृत्तेर्न प्रयोजकं ।
आचमनप्रवृत्तस्य पिपासापगमवन्नान्यप्रयोजनार्थत्वमवग-
म्यते । न चाग्निहोत्रादीनां तद्वदर्थप्राप्तप्रवृत्तिनियतत्वोप-
पत्तिः । अर्थप्राप्तप्रवृत्तिनियमोऽपि प्रयोजनाभावेऽनुपपन्न

---

आ॰ आचमनप्रवृत्तस्यार्थिको यः पिपासापगमस्तस्य तथा नान्यप्रयोजना-
र्थत्वं प्रयोजनम् प्रयुक्तिस्तदर्थत्वं नाचमनप्रवृत्तिप्रयोजकत्वं । तद्व-
ज्जीवनार्थं भिक्षादौ प्रवृत्तस्य यस्तत्र नियमः स न भिक्षादिप्रवृत्ति-
प्रयोजक इत्यर्थः । एतदुक्तं भवति नियोज्यत्वाभावात् किल ब्रह्म-
विदो नियमविध्यनुपपत्तिराशङ्क्यते । तत्र युज्यते । कथं नियोज्यो
हि नियोगसिद्ध्यर्थमपेक्ष्यते । नियोगश्च प्रवृत्तिसिद्ध्यर्थः । प्रवृत्तिश्चे-
दन्यतः सिद्धा किं नियोगेन । अतएव दर्शपूर्णमासनियोगादेवा-
वघातनियमेन प्रवृत्तिसिद्धौ तत्र न पृथक् नियोगोऽङ्गीक्रियते ।
तदभावे च न नियोज्यापेक्षेति । ब्रह्मविदो नियोज्यत्वाभावेऽपि
न नियमविध्यनुपपत्तिरिति । अग्निहोत्रादिप्रवृत्तेस्तु अन्यतोऽसि-
द्धत्वेन तद्विधित एव तत्र प्रवृत्तेर्वक्तव्यत्वेन तत्सिद्ध्यर्थं नियोगे
वाच्ये तस्य तत्र नियोज्यापेक्षेति वैषम्यमाह । न चाग्निहोत्रेति ।
नियमविधेर्नियोज्यानपेक्षायामपि तस्य क्लेशात्मकत्वात् प्रयो-
जनापेक्षा वाच्या । तदभावान्न नियमः सिध्यतीति शङ्कते । अर्थ-
प्राप्तेति । तन्नियमस्यापि पूर्ववासनावशादेव प्राप्तत्वात्तस्यापि न
नियमविधेरवकाशो येन प्रयोजनापेक्षा स्यादिति परिहरति ।
न तद्वदिति । यद्यपि नियतेन वाऽनियतेन वा भिक्षाटनादिना
जीवनं सिध्यति तथापि विद्योत्पत्तेः पूर्वं विद्यासिद्ध्यर्थं नियम-
स्यानुष्ठितत्वात्तद्वासनाप्राबल्याद्विद्योत्पत्त्यनन्तरमपि नियम एव
प्रवर्तते । नानियमे तद्वासनानां नियमवासनाभिरत्यन्तमभि-
भूतत्वेन पुनस्तदुद्बोधकस्य बलवत्त्वाभावात्तत्र न प्रवर्तत इति

ऐ॰भा॰ एवेति चेन्न । तन्नियमस्य पूर्व्वप्रवृत्तिसिद्धत्वात्तदतिक्रमे यत्नगौरवादर्थप्राप्तस्य च व्युत्थानस्य पुनर्व्वचनाद्विदुषः कर्त्तव्यत्वोपपत्तेः । अविदुषाऽपि मुमुक्षुणा पारिव्राज्यं कर्त्तव्यमेव । तथा च शान्तो दान्त इत्यादिवचनं शमदमादीनामात्मदर्शनसाधनानामन्याश्रमेष्वनुपपत्तेः । अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टमिति च श्वेताश्वतरे विज्ञायते । न कर्म्मणा न प्रजया

---

भा॰ नियमोऽप्यर्थसिद्ध इत्यर्थः । एतेन प्रत्यवायपरिहारार्थत्वमपि निषिद्धानुष्ठानस्य निरस्तं तस्य विदुषः प्रत्यवायाप्रसक्तेरिति । एवमुक्तरीत्या व्युत्थानस्य विधिं विना स्वतः प्राप्तत्वे सति तत्कर्त्तव्यताविधिमपि विदित्वा व्युत्थायेत्यादिकमनमोदते विद्वानित्याह । अर्थप्राप्तस्येति । विधितः कर्त्तव्यत्वोपपत्तेरित्यर्थः । न च विधेः प्रयोजनाभावेऽप्रवर्त्तकत्वादिति वाच्यं । प्रैषोच्चारणाभयदानादिवैधसुख्यप्राप्त्यर्थत्वेन विधेरर्थवत्त्वात् । न च तस्यापि वैयर्थ्यं शङ्क्यं । विदुषि परमहंसे लोकसङ्ग्रहार्थत्वात् । तस्य तु सङ्ग्रहस्य पूर्व्वाभ्यस्तमैत्रीकरुणादिवासनाप्राबल्येन प्रवृत्तिविध्युपदेशादाविव प्रयोजनानपेक्षणात् । यद्वा प्रारब्धकर्म्मोचितदेहेन्द्रियादिप्रतिभासेनाविद्यादिसत्त्वाज्जीवादिभुक्तिजनितकर्म्मकर्त्तव्यताभ्रान्तौ तन्निवर्त्तते न वा विदुषो व्युत्थानविधेरर्थवत्त्वोपपत्तेः । एवं विदुषो व्युत्थानप्रसाधनेन विद्याया अकर्म्मनिष्ठत्वं साधितं । तेनैव च तस्याः कर्म्मासम्बन्धोऽप्यर्थात् साधितः । इदानीं विविदिषोरपि व्युत्थानम् प्रसाधयन् विद्यायाः कर्म्मनिष्ठत्वं कर्म्मसम्बन्धित्वञ्च दूरादपास्तमित्याह । अविदुषापीति । तत्र श्रुतिमाह । तथा चेति । उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानम् पश्येदिति श्रुतिशेषः । तत्रोपरतशब्देन सन्न्यासो विहित इति भावः । शमादिसाधनानां पौष्कल्येनानुष्ठानस्य गृहस्थादिष्वसम्भवात्तद्विधिनाप्यर्थादाक्षिप्यते । सन्न्यास इति । श्रुतार्थापत्तिमाह । शमादीनाञ्चेति । चशब्द उपरतशब्दसमुच्चयार्थः ।

ऐ०भा० धनेन त्यागेनैके अमृतत्वमानशुरिति च । ज्ञात्वा नैष्कर्म्यमाचरेदिति स्मृतेः । ब्रह्माश्रमपदे वसेदिति च । ब्रह्मचर्यादिविद्यासाधनानाञ्च सार्वकाल्येनात्याश्रमिषूपपत्तेर्गार्हस्थ्ये असम्भवात् । न चैवमसमर्थं साधनं कस्यचिदर्थस्य साधनायालं । यद्विज्ञानोपयोगीनि च गार्हस्थ्याश्रमकर्माणि तेषां परं फलमुपसंहृतं । देवताप्ययलक्षणं संसारविषयमेव । यदि कर्मिण एव परमात्मज्ञानमभविष्यत् संसारवि-

---

आ० नेदं विद्वद्विषयं । तस्य साधनविधिविषयत्वात् किन्तु विविदिषुविषयमिति वस्तुमात्मदर्शनसाधनानामित्युक्तं । अत्याश्रमिभ्य इति ब्रह्मचर्यादीन् हंससन्न्यासान्तानाश्रमधर्मान् पदाश्रमानतिक्रम्य वर्त्तते परमहंस इति । सोऽत्याश्रमशब्देनोच्यत इति सन्निधिरत्र प्रतीयत इत्यर्थः । ऋषिसङ्घजुष्टं मन्त्रसमूहैर्ऋषिसमूहैर्वा सेवितं सत्यं प्रोवाचेत्यर्थः । न कर्मणेति त्यागस्य साध्यादमृतत्वसाधनत्वाभावेनामृतत्वसाधनं ज्ञानं त्यागेनानशुः व्याप्तवन्त इत्यभिधानेन ज्ञानसाधनत्वे त्यागोऽत्र विहित इत्यर्थः । ज्ञात्वेति ज्ञानवतो मया ज्ञात्वा निश्चयार्थं नैष्कर्म्यं कर्म्मत्यागरूपं सन्न्यासमाचरेदिति स्मृत्यर्थः । ब्रह्मेति ज्ञानसाधनीभूत आश्रमो ब्रह्माश्रमः सन्न्यास इत्यर्थः । किञ्च एकाकी यतचित्तात्मा इत्याद्युपक्रम्य ब्रह्मचारी व्रते स्थितः । मनः संयम्य मच्चित्तो युक्त आसीत मत्पर इत्यत्रैव ब्रह्मचर्यादिसाधनविधिवशादप्यर्थात्सन्न्यासविधिरित्याह । ब्रह्मचर्यादीति । ननु गृहस्थस्यापि ऋतुकालाभिगामिनस्तद्वत् ब्रह्मचर्यं कदाचिद्ध्यानकाले एकाकित्वञ्च सम्भवतीत्याशङ्क्य तस्यायुक्तत्वात्तत्ज्ञानासिद्धेर्ध्यानकाले पत्नीसम्बन्धाप्रसक्तेस्तद्विधिवैयर्थ्याच्च नैवमित्याह । न चेति । अतो न कर्मिनिष्ठत्वं कर्मसम्बन्धत्वस्याभ्यासस्यैवार्थः । यत्तु कर्म्म स एतमेव लोकमिच्छन्तः प्रव्रजन्त्यात्मज्ञानं प्रारभ्यत इत्यादिना कर्म्मसम्बन्धित्वमुक्तं तत्राह । यद्विज्ञानेति । तथा पूर्वोक्तकर्मसम्बन्धि ज्ञानं संसारफलकमन्यदेव तथो-

ऐ॰भा॰ यद्यस्यैव फलस्योपसंहारो नोपापत्स्यत्। अङ्गफलत्वा-
दिति चेन्न। तद्विरोधात्मवस्तुविषयत्वात्। आत्मविद्या-
या निराकृतसर्वनामरूपकर्मपरमार्थात्मवस्तुविषयं ज्ञान-
ममृतत्वसाधनं। गुणफलसम्बन्धे हि निराकृतसर्वविशे-
षात्मवस्तुविषयत्वं ज्ञानस्य न प्राप्नोति तथानिष्टं। यत्र
त्वस्य सर्वमात्मैवाभूदित्यधिकृत्य क्रियाकारकफलादि-
सर्वव्यवहारनिराकरणाद्विदुषः। तद्विपरीतस्याविदुषो
यत्र हि द्वैतमिवेत्युक्त्वा क्रियाकारकफलरूपस्यैव संसारस्य

---

टी॰ प्रसंख्यानमिति न तत्परमात्मज्ञानमित्यर्थः। ननु पूर्वोक्तमेव
परमात्मज्ञानं तच्च कर्मसम्बन्धि चेत्याशङ्क्य क्रियाकारकफल-
त्वेनोपसंहारात्परमात्मज्ञानस्य च मुक्तिफलकत्वान्न तु तत्प-
रमात्मज्ञानमित्याह। यदि कर्म्मिणश्चेदिति। कर्म्मिनियतत्वेनो-
क्तध्यानमेव परमात्मज्ञानं चेदित्यर्थः। परमात्मज्ञानाङ्गभूतपृथि-
व्यग्न्यादिदेवताज्ञानस्य तत्संसारफलं नाङ्गिनः परमात्मज्ञान-
स्येति। न तस्य मुक्तिफलत्वविरोध इति शङ्कते। अङ्गेति।
परमात्मज्ञानस्याङ्गसम्बन्धफलसम्बन्धादिसर्वविशेषरहितनिर्वि-
शेषवस्तुविषयत्वान्न तस्याङ्गादिसम्बन्धित्वं येन तदङ्गविषयत्वं
फलस्य स्यादिति परिहरति। नेति। तदेव स्पष्ट-
यति। निराकृतेत्यादिना। तथानिष्टमिति प्रमाता वा इद-
मित्यादेरध्यायस्यादिमात्रेणात्मनो निर्विशेषत्वसिद्धेरित्यर्थः। प्र-
करणनियमादपि च परमात्मविदः सर्वसम्बन्धशून्यत्वमुक्त्वा अवि-
दुषः संसारफलोक्तेश्चेह संसारफलस्यातीतस्य ज्ञानस्य पर-
मात्मज्ञानत्वं वक्ष्यमाणस्य निर्विशेषवस्तुविषयस्यैव परमात्म-
ज्ञानत्वं मुक्तिफलत्वस्येत्याह। यत्रेत्यादिना। तथेहापीति वाक्ये
फलपदद्वयपाठे एकं फलं मिथ्याज्ञानार्थं नित्याचरणादपि
संसारविषयं संसारान्तर्गतमिति नत्वं। एवं कर्मसम्बन्धित्वं
ध्यानस्योक्त्वा यावज्जीवादिश्रुतेः कर्मत्यागो न सम्भवतीति यत्पूर्व-

ऐ०भा० दर्शितत्वाच्च वाजसनेयिब्राह्मणे तृतीयेऽध्याये ६।५।१५ संसारविषयं यत्फलमशनायादिमदसत्यात्मकं तत्फलमुपसं-
हृत्य केवलं सर्वात्मवस्तुविषयज्ञानममृतत्वाय वक्ष्यामीति
प्रवर्त्तते। ऋणप्रतिबन्धश्चाविदुष एव। सोऽयं मनुष्यलोकः
पुत्रेणैवेत्यादिलोकत्रयसाधननियमश्रुतेः। विदुषश्चर्णप्र-
तिबन्धाभावो दर्शित आत्मलोकार्थिनः किं प्रजया करि-
ष्याम इत्यादिना। तथैतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः
कावषेया इत्यादि। एतद्ध स्मैवैतत् पूर्वे विद्वांसोऽग्निहोत्रं न

---

टी० वादिनोक्तं तत्र यावज्जीवादिश्रुतेरविद्वद्विषयत्वमुक्तं। ऋणश्रुते-
रिदानीं गतिमाह। ऋणेति। ऋणस्यानपाकृतस्य मनुष्यादिलो-
कप्राप्तिम् प्रति प्रतिबन्धकत्वात्तदर्थिनोऽविदुष एवर्णापाकरणं
कर्त्तव्यं न मुमुक्षोः। मुक्तिं प्रति तस्याप्रतिबन्धकत्वादित्यर्थः। ननु
ऋणस्य मुक्तिम् प्रत्यपि प्रतिबन्धकत्वमस्तु विशेषाभावात्। अनपा-
कृत्य मोक्षं तु सेवमानो व्रजत्यध इति स्मृतेश्चेत्याशङ्क्याह। सोऽय-
मिति। सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन। कर्म्मणा पितृ-
लोको विद्यया देवलोक इति श्रुतेः। पुत्रादीनां मनुष्यलोकादि-
हेतुत्वावगमात् पुत्रादिभिरपाकर्त्तव्यानां पुत्राद्यभावरूपाणामृ-
णानां पुत्रादिसाध्यभावेन साध्यलोकाभावाच्च मुक्तिं प्रति
तस्यास्तदभावरूपपुत्रादिसाध्यत्वाभावात्। स्मृतेश्च रागिणं प्रति
सन्न्यासनिन्दार्थवादमात्रत्वादित्यर्थः। न केवलमृणत्रयस्य मुक्तिम्
प्रत्यप्रतिबन्धकत्वं किन्तु श्रुतितोऽपीत्याह। विदुष इति। श्रुति-
त्रयेण क्रमेण प्रजाध्ययनकर्म्मणामननुष्ठितानामप्रतिबन्धकत्वं दर्शि-
तं। कावषेया इत्यनन्तरं किमर्था वयमध्येष्यामहे इति शेषो
द्रष्टव्यः। उच्यते। अविदुषस्त्वर्णीति। यद्यप्यविदुषोऽपि लोकत्र-
यम् प्रत्येव प्रतिबन्धकत्वात् मुक्तिं प्रति प्रतिबन्धकत्वाभावादृण-
स्यानपाकरणीयत्वान्मुमुक्षोः पारिव्राज्यसम्भवादाश्रमा न सम्भ-
वन्ति तथापि विद्वांस आत्मलोकार्थिनस्त्ववश्यमावेयं श्रवण। यदा

ऐ॰भा॰ गुरुवासमकुरिति कौषीतकीनां। अविदुषस्तदृणानपा-
करणे पारिव्राज्यानुपपत्तिरिति चेन्न। प्राग्गार्हस्थ्या-
प्रतिपत्तेर्ऋणित्वाभावादधिकारानारूढोऽप्यृणी चेत् स्यात्
सर्वस्य ऋणित्वमित्यनिष्टम् प्रसज्येत। प्रतिपन्नगार्हस्थ्यस्यापि
गृहाद्वनी भूत्वा प्रव्रजेत् यदि वेतरथा ब्रह्मचर्यादेव प्रव्र-
जेद्गृहाद्वा वनाद्वेति। आत्मदर्शनोपायसाधनत्वेनेष्यत एव
पारिव्राज्यं यावज्जीवादिश्रुतीनामविद्वदमुमुक्षुविषये कृता-

---

टी॰ परिहारान्तरं वक्तुमाशङ्कां प्रकटयति। गृहस्थस्यैवर्णप्रतिबन्धकत्वं
तस्यैव तन्निराकरणाधिकारात्। ततश्च गार्हस्थ्यप्रतिपत्तेः प्राक्
ब्रह्मचर्य एव मुमुक्षोः पारिव्राज्यं सम्भवतीति परिहरति।
नेति॥ यद्यप्युपनयनानन्तरमेव ऋणापाकरणेऽधिकारः सम्भव-
तीति प्राग्गार्हस्थ्येत्युक्तं तथापि विविदिषासंन्यासेऽधीतवेदस्यै-
वाधिकार इति अधीतवेदस्य गार्हस्थ्याप्रतिपत्तेः प्रागिति द्रष्टव्यं।
ननु जायमानो वै ब्राह्मणस्त्रिभिरृणवा जायते ब्रह्मचर्येण ऋ-
षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति। जायमानमात्र-
स्यर्णवत्त्वं प्रतीयत इत्याशङ्क्यर्णित्वोक्तेः प्रयोजनं न साक्षात् कि-
ञ्चिदस्त्यपि तु ब्रह्मचर्यादिकर्तव्यताज्ञापनं। न चाधिकारानारू-
ढस्तत्कर्तुं शक्नोति। जायमानमात्रस्यासामर्थ्यात्। किञ्च ब्रा-
ह्मणग्रहणात् क्षत्रियादेरृणाभावप्रसङ्गः। द्विजात्युपलक्षण-
त्वेऽधिकार्युपलक्षणत्वमेव न्याय्यं। अतो जायमानपदमधिकारं
लक्षयतीति जायमानोऽधिकारी सम्पद्यमान इति तदर्थः।
ततश्च ततः प्राक् नर्णसम्बन्ध इत्याह। अधिकारेति॥ अनिष्ट-
मिति ब्रह्मचारिणोऽप्यृणित्वे ब्रह्मचर्य एव मृतस्य नैष्ठिकस्य च
लोकप्रतिबन्धः। स्याच्चानिष्टं। अष्टाशीति सहस्राणामित्यारभ्य
तदेव गुरुवासिनामित्यादिना पुराणे लोकप्राप्त्युक्तेरित्यर्थः॥
न केवलं गार्हस्थ्यात् प्रागेव सन्न्याससिद्धिः किन्तु विधिवत्प्रति-
पन्नगृहस्थस्यापि तदस्तीत्याह। प्रतिपन्नेति॥ आत्मदर्शनेति आत्म-
दर्शने ये उपायाः श्रवणादयस्तत्साधनत्वेनेत्यर्थः। न चर्णश्रुत्या

ऐ॰भा॰ र्थता । छान्दोग्ये च केषाञ्चिद् द्वादशरात्रमग्निहोत्रं
हुत्वा तत ऊर्द्ध्वं परित्यागः श्रूयते । यत्त्वनधिकृतानाम्
पारिव्राज्यमिति । तन्न । तेषाम् पृथगेवोत्सन्नाग्निरनग्निको
वेत्यादिश्रवणात् सर्व्वस्मृतिषु चाविशेषेणाश्रमविकल्पः प्रसि-
द्धः समुच्चयश्च । यत्तु विदुषोऽर्थप्राप्तं व्युत्थानमित्यमाम्ना-
र्थत्वे गृहे वने वा तिष्ठतो न विशेष इति तदसत् । व्युत्था-
नस्यैवार्थप्राप्तत्वात्तान्यथावस्थानं स्यात् । अन्यथावस्थानस्य

---

व्या॰ प्रामाण्यविधिविरोधः । तस्या अवदानार्थवादमात्रत्वेन स्वार्थे
तात्पर्य्याभावात् । अन्यथा तदवदानैरेवावद्यते तदवादानाम-
वदानत्वं इत्यवदानमात्रनिरस्तत्वेऽन्या ब्रह्मचर्य्यादीनामप्यननुष्ठे-
यत्वप्रसङ्गादिति भावः । एवमपि यावज्जीवादिश्रुतिविरोधः
सन्न्यासश्रुतेरित्याशङ्क्याह । यावज्जीवेति । विरक्तमुमुक्षुमात्र-
विषयिण्या सन्न्यासश्रुत्या यावज्जीवादिसामान्यश्रुतेरमुमुक्षुवि-
षये सङ्कोच इत्यर्थः । अग्निहोत्रविषयकयावज्जीवादिश्रुतेर्नान-
यैव सङ्कोचः किन्तु श्रुत्यन्तरेणैव द्वादशरात्रानन्तरमग्निहो-
त्रत्यागविधायिन्या सा पूर्व्वमेव सङ्कोचिता न तां विरोद्धुं प्रभो-
तीत्याह । छान्दोग्य इति । केषाञ्चिच्छाखिनां मध्ये द्वादशरात्रमनु-
तवासा यजमानः स्वयमग्निहोत्रं जुहुयादथाप्रवसन् तस्यैव
सोऽनेन पशुना वेष्टाऽमीमुत्सृजतीति श्रूयत इत्यर्थः । ननु पारिव्रा-
ज्यश्रुतिरप्यनधिकृतविषये सङ्कोचितेत्याह । यत्त्विति । वचना-
न्तरेणैव तेषां तद्विधेर्यावासनधिकारिविषयः किन्त्वधिकार्य्येवेति
परिहरति । नेति । उत्सन्नाग्निभिरग्निभिः निरग्निकोऽपरिगृ-
हीताग्निरिति भेदः । स्मृत्युपबृंहितत्वेऽपि पारिव्राज्यश्रुतिर्बली-
यसीत्याह । सर्व्वस्मृतिषु चेति । अत एव ब्रह्मचर्य्यवान् प्रव्रजति ।
गृही वनी वा । यमिच्छेत्तमावसेत् । ब्रह्मचारी गृहस्थो वा वान-
प्रस्थोऽपि भिक्षुकः । य इच्छेत् परमं स्थानमुत्तमां वृत्तिमाश्रयेदित्या-
दिषु विकल्पः सिद्धः । अधीत्य विधिवद्वेदान् पुत्रानुत्पाद्य धर्म्मतः ।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेदित्यादिषु समुच्चयश्च

ऐ॰भा॰ कामकर्मप्रयुक्तत्वं ह्यवोचाम । तदभावमात्रं व्युत्थानमिति । यथा कामित्वन्तु विदुषोऽत्यन्तमप्राप्तं अत्यन्तमूढविषयत्वेनावगमात् तथा शास्त्रविहितमपि कर्मात्मविदोऽप्राप्तं गुरुभारतयाऽवगम्यते किमुताऽत्यन्ताविवेकनिमित्तं यथा कामित्वं। न ह्युन्मादतिमिरदृष्ट्युपलब्धं वस्तु तदपगमेऽपि तथैव स्यादुन्मादतिमिरदृष्टिनिमित्तत्वादेव । तस्मादात्मविदो व्युत्थानव्यतिरेकेण न यथा कामित्वं । न चान्यत् कर्त्तव्यमित्येतत् सिद्धं । यत्तु विद्याञ्चाविद्याञ्च

---

था॰ सिद्ध इत्यर्थः। एवं विविदिषासंन्यासं प्रसाध्य पूर्व्वेण साधितविद्वत्संन्यासे शङ्कामनुवदति। यत्त्विति। पूर्व्वेण ग्रन्थ एवाप्यादनमिति प्रश्ना निरस्ता इह तु गृहे वा वने वाऽस्थानमित्यनियमपक्षो निराकर्त्तुं स पुनरनूद्यते। यथेष्टचेष्टामधिकां परिहृत्यैवेति द्रष्टव्यं। यद्यप्यर्थप्राप्तस्यापि पुनर्व्वचनादित्यत्र विद्वद्व्युत्थानस्यापि शास्त्रार्थत्वमुक्तमेव तथाप्यशास्त्रार्थत्वमङ्गीकृत्याप्याह। तदसदिति। यदि व्युत्थानवच्छास्त्रार्थत्वमप्यर्थप्राप्तं स्यादेवमनियमो न सेत्स्यतीत्याह। व्युत्थानस्यैवेति। अन्यथेति शास्त्रार्थत्वे इत्यर्थः। नन्वशास्त्रार्थत्वे व्युत्थानस्यापि कामादिप्रयुक्तत्वानुष्ठेयत्वादित्याशङ्क्याह। तदभावेति। कामाद्यभावमात्रमेव व्युत्थानमित्युक्तत्वात्तस्य नानुष्ठेयत्वमित्यर्थः। एवमनियमपक्षं निरस्य व्युत्थानस्य शास्त्रार्थत्वे यथेष्टचेष्टाप्रसक्तिं निराकरोति। यथा कामित्वन्त्विति। चेष्टामात्रमेव कामादिप्रयुक्तं। निषिद्धचेष्टा तु शास्त्रार्थज्ञानशून्यात्यन्तमूढविषया। तदुभयञ्च विदुषो नास्तीति चेष्टामात्रमेवाप्रसक्तं निषिद्धचेष्टा तु दूरापास्तेत्यर्थः। एतदेव विवृणोति। तथेति। तथा चेत्यर्थे तथाशब्दः। गुरुभारतयातिक्लेशतया यतोऽवगम्यतेऽतोऽप्राप्तमित्यन्वयः। अविवेकादिनिमित्तापगमे नैमित्तिकापगम इत्यत्र दृष्टान्तमाह। न हीति। उन्मादद्दृष्ट्युपलब्धं गन्धर्व्वनगरादितिमिरदृष्ट्युपलब्धं द्विचन्द्रादिरिति विवेकः। न चान्यदिति वैदिकं कर्मेत्यर्थः।

ऐ॰भा॰ द्वेदोभयꣳ सहेति । न विद्यावतो विद्यया सहाविद्यापि वर्त्तत इत्यर्थः । कस्तर्ह्येकस्मिन् पुरुषे एकदैव सह सम्बध्येयातामित्यर्थः । यथा शुक्तिकायां रजतं शुक्तिकाज्ञाने एकस्य पुरुषस्य । दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञातेति हि काठके । तस्मान्न विद्यायां सत्यामविद्यासम्भवोऽपि । तपसा ब्रह्म विजिज्ञासस्वेत्यादिश्रुतेः । तपआदिविद्योत्पत्तिसाधनं गुरूपासनादि च कर्माविद्यात्मकत्वादविद्योच्यते । तेन विद्यामुत्पाद्य मृत्युं

---

धा॰ ननु विद्यया अविद्यायाः सहभावस्त्वयाङ्गीकृतोऽपि तन्मूलकामादिकं स्यादेवेति तन्निमित्ता सर्वेष्टचेष्टा स्यादित्यत आह नत्विति । यत्तु विद्याञ्चेति वचनं तस्य न्यायमर्थं इति । तस्येति-शब्दाध्याहारेण वाक्यं योज्यं । एकस्मिन्निति कालभेदेन स्थितयोरप्येकस्मिन् पुरुषे साहित्यमादर्थ इत्यर्थः । नन्विदं साहित्यं न सत्यं किन्त्वेककाले सहत्वं सत्त्वमित्याशङ्क्य श्रुत्यन्तरे विद्याविद्ययोः साक्षात्साहित्यस्यासम्भवोक्तेरत्रैव साहित्यं मान्यमित्याह । दूरमेते इति । विषूचीति विष्वग्गमने विरुद्धे इत्यर्थः । अस्मिन्नपि मन्त्रेऽविद्यया मृत्युं तीर्त्वेत्युत्तरार्द्धपर्यालोचनया ऽविद्याया विद्योत्पत्तिहेतुत्वमात् तयोः कालभेदेनैव सहत्वमित्याह । तपसेत्यादि । यदा गुरूपासनतपसी अविद्येत्युच्यते । तयोश्च श्रवणादिकालेऽनुष्ठेयत्वाद्विद्योत्पत्तिकाले एकस्मिंस्तयोः साहित्यमस्तीत्यर्थान्तरमाह । तपसेति । अस्मिन्नर्थे मन्त्रभेदोऽप्यनुगुण इत्याह । तेन विद्यामिति । साक्षादविद्या मृत्युत्वेन मृत्युतरणहेतुत्वानुपपत्तेरविद्याशब्देन तपआदिकमेवोच्यते । तद्विद्याप्रधानत्वार्थात् कल्प्यत इत्यर्थः । अविदन्नियतस्वेनेति जिजीविषेदिति जीवितेच्छाकृतप्रायविद्याकार्यैश्च तस्याः सूचनादित्यर्थः । परिहृतमिति यावज्जीवादिश्रुतिन्यायेन परिहृतप्रायमित्यर्थ-द्वारा तृतीयस्य चतुर्थपादे सूत्रं नाविशेषादिति सूत्रेण परिहृतमित्यर्थः । अशमनादिति विरोधेन विद्यया सहासम्-

ऐ॰भा॰ काममतितरति। ततो निष्कामस्यैकैषणो ब्रह्मविद्यया ऽमृतत्वमश्नुत इत्येतमर्थं दर्शयन्नाह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते इति । यत्तु पुरुषायुः सर्व्वकर्म्मणैव व्याप्तं । कुर्व्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समा इति अविद्वद्विषयत्वेन परिहृतं इतरथाऽसम्भवात् । यत्तु प्राणमपि पूर्व्वोक्तं तुल्यत्वात् कर्म्मणा विरुद्धमात्मज्ञानमिति तत्सविशेषनिर्विशेषात्मतया प्रत्युक्तं उत्तरत्र व्याख्याने दर्शयिष्यामः । अतः केवलनिष्क्रियब्रह्मात्मैकत्वविद्याप्रदर्श-

---

आ॰ वादित्यर्थः । उदाहृतश्रुतिस्मृत्यसम्भवादिति वा ॥ प्रत्युक्तमिति निर्व्विशेषात्मज्ञानस्य कर्त्रादिकारकोपमर्द्दकत्वेन विरुद्धत्वादुपमर्द्दं चेति स्थूलेनाविरुद्धत्वं प्रत्युक्तमित्यर्थः । तस्मादप्रमाणविद्याया यदभिनिविष्टत्वं कर्म्मासमन्वितत्वं केवलात्मविषयत्वञ्च सिद्धमिति पूर्व्वोक्तकर्म्मभिर्विद्यया च शुद्धसत्त्वस्य तत एव साधनचतुष्टयसम्पन्नस्य केवलात्मस्वरूपावस्थानलक्षणमोक्षसिद्ध्यर्थं केवलात्मविद्याऽऽरभ्यत इत्युपसंहरति । स इति ॥ नन्वात्मनः सविशेषत्वप्रतीतेस्तद्विरोधात् कथं कैवल्यमित्याशङ्क्य विशेषस्य सर्व्वस्यात्मनि मायाकल्पितत्वान्न वास्तवनिर्व्विशेषत्वविरोध इति तदर्थं माययात्मनः सकाशात् सृष्टिं वक्तुं सृष्टेः पूर्व्वमात्मनो निर्व्विशेषरूपं दर्शयितुमात्मा वा इत्यादि वाक्यं । तत्रात्मशब्दार्थमाह । आप्नोतीति ॥ आप्नोतेरिति पदेन सर्व्वमादिरूप आप्नोत्येव इत्यन्वयः । आदत्ते इत्यनन्तरमुच्यत इति शेषः । नन्वात्मशब्देन कथमुक्तलक्षण आत्मोक्तः इत्याशङ्क्यात्मशब्दस्य व्युत्पत्त्युत्पत्तिबलाज्ज्ञेया चेत्याह । आप्नोतेरिति । वा शब्दश्चार्थे आदानञ्च समुच्चिनोति । तथा च स्मृतिः । यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्तित इति ॥ आप्तिज्ञाने व्याप्तिबोधके सत्तास्फुरणाभ्यां सर्व्वं व्याप्नोतीति सर्व्वगतत्वं सर्व्वशक्तित्वञ्चोच्यते। तथाप्रदानेनोपादानत्वसूचनात् सर्व्व-

## ऋग्वेदीयैतरेयोपनिषत् ॥

ऐ०उ० ॥ ॐ परमात्मने नमः ॥ हरिः ॐ ॥

आत्मा वा इदमेक एवाग्र आसीत्

---

ऐ०भा० सार्थमुत्तरो ग्रन्थ आरभ्यते। आत्मेति। आप्नोतेरत्तेरततेर्वा परः सर्वज्ञः सर्वशक्तिरशनायादिसर्वसंसारधर्मवर्जितो नित्यशुद्धबुद्धमुक्तस्वभावोऽजोऽजरोऽमरोऽमृतोऽभयोऽद्वयः। वै इदं यदुक्तं नामरूपकर्मभेदभिन्नं जगदात्मैवैकोऽग्रे जगतः सृष्टेः प्रागासीत्। किं नेदानीं स एवैको न कथं तर्ह्यासीदित्युच्यते। यद्यपीदानीं स एवैकस्तथाप्यस्ति विशेषः। प्रागुत्पत्तेरव्याकृतनामरूपभेद-

---

आ० ग्रसितं। अमीत्यनेन संहर्तृत्वं। अततीत्यनेन त्रिविधपरिच्छेदराहित्यमुच्यत इति। अशनायादिवर्जितत्वादिति विषयादानेन तृष्णा च प्रत्यग्भेदश्चोच्यत इत्युक्तस्य आत्मपदेनोच्यत इत्यर्थः। अभिव्यक्तनामरूपव्यावर्तनेनात्ममात्रावधारणार्थो वैशब्द इत्याह। वै इति। यदुक्तमिति पूर्वत्र माध्यन्दिनप्रजापतिरूपत्वेन यदुक्तमित्यर्थः। यदुक्तेति पाठः साधुः। अग्रेदमितिपदेन प्रत्यक्षादिप्रसिद्धमुच्यते। अग्रे इति विशेषणादासीदिति भूतत्वोक्त्या पूर्वमेवात्ममात्रं इदानीं त्वात्ममात्रं न भवति किन्तु पृथगस्तीति प्रतीयत इति नाद्वितीयात्मेति शङ्कते। किं नेदानीमिति। यदस्य मायिकस्य कदाचिदपि स्वतः सत्त्वायोगादात्मनो द्वितीयत्वस्य च विरोध इत्याह। नेति। तर्ह्यात्ममात्रस्येदानीमपि सत्त्वे तस्य भूतत्वोक्तेः का गतिरिति पृच्छति। कथं तर्ह्यासीदिति। इदमुपलक्षणमग्रे इत्यपि कथमिति द्रष्टव्यं। जगतः कालत्रयेऽप्यात्मव्यतिरेकेणाभावो यद्यपि तथापि तथा बोधने बोध्यस्य प्रत्यक्षादिविरोधाद्बोधयोग्यत्वाभावात् शङ्का नारोहेत्। अतः प्रागुत्पत्तेरासीदित्युच्यते बोध्यस्य चित्तमनुसृत्य सदपि जगतो नामरू-

ऐ०भा० मात्मभूतं आत्मैकशब्दप्रत्ययगोचरं जगदिदानीं व्याकृतनामरूपभेदत्वादनेकशब्दप्रत्ययगोचरमात्मैकशब्दप्रत्ययगोचरश्चेति विशेषः। यथा सलिलात् पृथक् फेनं नामरूपव्याकरणभाक् सलिलैकशब्दप्रत्ययगोचरमेव फेनं। यदा सलिलात् पृथङ्नामरूपभेदेन व्याकृतं भवति तदा सलिलं फेनश्चेत्यनेकशब्दप्रत्ययभाक् सलिलमेवेति चैकशब्दप्रत्ययभाक् न फेनं भवति तद्वत्। नान्यत् किञ्चन

---

आ० प्राभिव्यक्तभावमपेक्ष्यैव न त्विदानीमात्माभावाभिप्रायेणेत्युत्तरमाह। यद्यपीत्यादिना। अव्याकृतो नामरूपभेदो यस्मिन्नात्मनि तथाविधात्मभूतमित्यर्थः। आत्मैकशब्दप्रत्ययगोचरमिति यद्यपि प्रागुत्पत्तेर्जगद्बुद्ध्योरभावेन शब्दप्रत्ययौ तावपि न स्तस्तथापीदानीं तदानींतनात्मतत्त्वं सुप्तादुत्थितः सुप्तिकाले नात्मतत्त्वमिव प्रमाणान्तरेण ज्ञात्वा तदानीमात्मैक एवासीदिति वदसि। प्रत्येति चेति। तथोक्तमोऽस्य एवात्मैकशब्दप्रत्ययौ स्त इति द्रष्टव्यं। अनेकशब्देति अविवेकिनां घटादिशब्दप्रत्ययगोचरं घटः सच्चित्यात्मशब्दपर्यायसच्छब्दगोचरश्चेत्यर्थः। गोचरशब्दस्य भावप्रधानत्वमङ्गीकृत्य गोचरत्वं यस्येति बहुव्रीहिणा नपुंसकत्वं द्रष्टव्यं। आत्मैकशब्देति विवेकिनामित्यर्थः। उक्तमर्थं दृष्टान्तेन विशदयति। यथेति। अनात्मशब्दबुद्ध्यभिभवात् सच्चिदादिशब्दोपलक्षितं सत्यज्ञानानन्दरूपेऽखण्डैकरसे आत्मोपस्थितिः। तस्यैवार्थस्य स्फुटीकरणार्थमेकादिपदानि। तत्रैक इत्यात्मान्तराभाव उच्यते। एवेत्यनेन वृक्षादावेकत्वेऽपि शाखादिभिर्नानात्मवदेकस्यात्मनो नानात्वाभाव उच्यते इति स्वजातीयभेदस्वगतभेदनिराकरणार्थत्वेन पदद्वयमित्यभिप्रेत्य विजातीयभेदनिराकरणार्थत्वेन नान्यत् किञ्चनेति पदं व्याचष्टे। नान्यदिति। ननु जडप्रपञ्चस्य कारणीभूता जडा माया वर्तत इति कथं विजातीयभेदनिषेध इत्यत आह। मिषदिति। मायायाः सत्त्वेऽपि तदानीं व्यापाराभावाद्व्यापारवतोऽन्यस्य निषेधः संभवतीत्यर्थः। ननु निर्व्यापाराया अपि

ऐ॰उ॰ नान्यत्किञ्चन मिषत्।

---

ऐ॰भा॰ न किञ्चिदपि मिषदिति। मिषद्व्यापारवदितरद्वा।

---

व्या॰ तस्य प्रपञ्चस्य भावे आत्मशब्दोक्तं जगत्कारणत्वं न सिध्ये-
दित्यत आह । नान्यदिति । मिषद्व्यापारं चेत्यर्थः । ननु माया
तथाविधाऽस्तीति पूर्व्वोक्तदोषः पुनः स्यादित्याशङ्क्य मिषदित्य-
नेन न स्वतन्त्रं सतःसत्ताकमुच्यते तथाविधस्य च निषेध इति ।
व्यतिरेकदृष्टान्तमाह । यथेति । यथात्मव्यापारीति व्यापार-
वितत्वात्मन्येवान्तर्भूतमात्मव्यापारीत्युच्यते न तद्भिन्नमित्यर्थः । प्र-
क्षिप्तेऽपि प्राभाकरादीनामिव तस्याः सत्ता सत्यं स्यादित्याह । स्वत-
न्त्रमिति । यथा सांख्यानां प्रधानमभिभूतं स्वतः सत्ताकमस्ति ।
चार्वाकानाञ्च तथाविधा भूतानि सन्ति तथाविधमात्मव्यति-
रिक्तं मिषदित्यनेनाऽत्र निषिध्यते । माया तु न तथा भूतेति
नोक्तदोष इत्यर्थः । दीप्तिवाचकाल्लु धातूनामनेकार्थत्वेन मिषदिति
धातोरासीदित्यर्थमुक्ता नान्यत् किञ्चनासीदिति वाक्यार्थ उक्तः ।
तस्य वाक्यार्थं इदं जगदग्रे सजातीयविजातीयस्वगतभेदरहि-
तात्मैवासीदित्यनेनात्मनोऽद्वितीयत्वं जगतस्तथाविधात्ममात्रतया
मिथ्यात्वञ्च सूचितमनेनात्मे जगत आत्ममात्रत्वोक्तेनं द्विविधयो-
जनयात्मैव एवासीन्नान्यत् किञ्चनेत्येतावतैवाद्वयत्वसिद्धेरिया-
मन्वा निरस्ता जगन्मृषात्वस्यैव प्रयोजनत्वात् । न चैवमर्थभेदे
वाक्यभेदः स्यादिति वाच्यं । चाद्वयत्वस्य भावमात्रत्वेन जगदनिर्व-
चनीयत्वस्येदं जगदग्रआत्मैवेति विशिष्टविधेयोक्तत्वात् । विशेष-
णानामर्थात्सिद्धेः केवलेन यथेष्टव्यपदेशनार्थद्वयस्यापि सूचित-
त्वादेवान्तेऽपि तस्य त्रय आवसथास्त्रयः स्वप्ना इति आवसथाः
स्वप्नत्वेन मृषात्वमुक्ता स एतमेव पुरुषं ब्रह्मततमपश्यदि-
त्यात्मशब्दोक्तं । ततश्च त्रिविधपरिच्छेदराहित्यञ्चाद्वयमख-
ण्डत्वं वक्ष्यति । न चेदमात्मैवासीदिति सामानाधिकरण्येनात्मनो
जगदैक्यमुख्यत्वेन प्रतीयते न तु मृषात्वमिति वाच्यं । स्थाणुरेव एवे-
ति पदैकत्वेऽप्यखण्डैकरसे वस्तुपरीतग्रस्तवसौ तेनैतत्संस्पृष्टिरूप-
त्वेन मृषात्वसिद्धेर्जगदैक्यस्य घटः सन्नित्यादिरूपेण प्रत्यक्ष-

ऐ॰भा॰ यथा साङ्ख्यानामनात्मपक्षपाति स्वतन्त्रं प्रधानं । यथा

---

व्या॰ सिद्धत्वेन प्रयोजनाभावेन च तत्प्रतिपादनस्यानुपपत्तेश्च ब्रह्मा-
त्वमेव तदर्थः । मिषदित्यनेन स्वातन्त्र्यनिषेधेन स्वतः सत्तानि-
षेधादपि ब्रह्मात्वसिद्धेश्च । स्वतः सत्तावत्त्वे स्वव्यापारे स्वातन्त्र्यमेव
स्यात् । न चानेन प्रकारेणेदानीमपि ब्रह्मात्वस्यात्माखण्डत्वस्य च
वक्तुं शक्यत्वादग्र इति विशेषणं व्यर्थमिति वाच्यं । इदानीमात्म-
भिन्नतया पृथक् सत्त्वेन च प्रतीयमानत्वेन तस्य सद्रूपात्मना-
त्वे बोधिते विरोधप्रतीत्या तस्य शुद्धत्वादोषः स्यादिति गुड-
जिह्विकान्यायेनादौ पृथङ्नामरूपानभिव्यक्तिदशायामात्मा-
त्वं बोध्यते । तस्मिन् बोधिते पश्चात्तन्न्यायेनेदानीमपि स्वयमे-
वात्ममात्रत्वं ज्ञास्यतीत्यभिप्रायेणाग्र इति विशेषणोपपत्तेः । यद्वा
वाजसनेयिके तद्धेदं तर्ह्यव्याकृतमासीदिति श्रुतेः प्राक्कार्यस्या-
नभिव्यक्तनामरूपावस्थाबीजभूताव्याकृतात्मनोच्यते इह त्वात्मना-
त्मता अतः श्रुत्योर्विरोधपरिहारायोपसंहारे कर्तव्ये इदा
व्याकृतपदमुपसंक्रियते । तत्र आत्मपदमितीदमग्रे अव्याकृत-
मासीत्तत् सदात्मैवासीदिति वाक्यं सिध्यति । तदव्याकृतशब्देन
तत्र व्याचीतमया गृह्यते । मायां तु प्रकृतिं विद्यादित्यादि
जगद्बीजावस्थायाम्मायादिशब्दप्रयोगात् तमोरूपा मायोच्यते
तत्कार्यस्याग्रेऽनभिव्यक्तनामरूपात्मकमायात्मकत्वं सिध्यति । स
स्वात्मतादात्म्यापन्ना साङ्ख्यमतवत् स्वतन्त्रत्वनिरासेन तत्र क-
ल्पितत्वं सिध्यति । तयोः कार्यकारणभावाद्यभावेन प्रकारान्तरेण
तादात्म्यानिर्वाहात्तस्यात्मनोऽखण्डत्वं तद्भिन्नस्य ब्रह्मस्वात्मनः
परिच्छिन्नमानाऽविद्याधिष्ठानत्वेन विवर्तोपादानत्वं तस्याश्च
परिणामित्वञ्च सूचितम्भविष्यति । कार्यस्य ब्रह्मात्वार्थमेवाव्याकृ-
तात्मत्वमुच्यते । तस्याव्याकृतस्यात्मतादात्म्येन मायात्वेन च ब्रह्मा-
त्वादिदानीन्तु नानभिव्यक्तनामरूपबीजात्मत्वमित्यग्र इति वि-
शेषणमप्यर्थवत् । तदभिप्रेत्यैव भाष्ये प्रागुत्पत्तेरनभिव्यक्तनामरू-
पभेदात्मभूतमात्मैकशब्दप्रत्ययगोचरं जगदिदानीन्तु व्याकृत-
नामरूपभेदवत्त्वादनेकशब्दप्रत्ययगोचरमात्मैकशब्दप्रत्ययगोचर-
श्चेति विशेष इतीदानीन्त्वनभिव्यक्तनामरूपबीजात्ममेवाग्रश-
ब्दस्य व्यावर्त्यमुक्तं । न च साम्यादिदानीमेव मायात्मकेन ब्रह्मा-

ऐ०भा० च कणादानामणवो न तद्वदिहान्यदात्मनः किञ्चि-

---

आ० त्समुच्यतामिति वाच्यं। इदानीं प्रत्यक्षादिविरोधेन तथा बोधयितु-मशक्यत्वादित्युक्तत्वान्नामरूपाभिव्यक्तेः सृष्टेः पूर्व्वमभावेनेदानी-मेव विद्यमानत्वेन कादाचित्कत्वादपि रज्जुसर्पादिवन्मृषात्वमिति वक्तुमपि प्राग्व्याकृतत्वेऽस्तित्वं घटतीति न किञ्चिदवद्यं। अथवा ज-गदधिष्ठानं किञ्चित् सद्रूपं सम्भावयितुमिदमग्र आसीदित्युच्यते। असम्भाविते तस्मिन्नखण्डलोकोक्तेर्निर्विषयत्वं प्रसज्येत। अनेनासद्द्वि-प्रविषाणादेरिव सद्रूपेणोत्पत्त्यसम्भवात् कार्य्यस्य प्रागवस्था सदा-त्मिका चित्सम्भाविता। तस्याश्च चेतनत्वे कार्य्याकारेण स्वतोऽप्रवृत्ते-रतिरिक्तचेतनाधिष्ठानाङ्गीकारे च गौरवात्। उपादानाधिष्ठान-त्वयोरेकस्मिन्नेवात्मघटसम्भवाच्च चेतनत्वमात्मन्येवेत्यनेन सम्भाव्यते। एवं सम्भाविते ह्यधिष्ठाने उपादानकारणे चात्मन्यखण्डैकरसत्वं तस्य वक्तुमेक एव नान्यत्किञ्चनेति पदानि अस्मिन् मन्त्रे चेदमग्र आत्मैवासीदित्यनेन सम्भावितं कार्य्यस्य प्राग्रूपमनूद्य यदात्मक-मिदमासीत् स एक एव नान्यत् किञ्चनेत्यखण्डैकरसत्वं विधीयते इति न कस्यचिदप्यानर्थक्यम्। अत एव छान्दोग्ये सदेव सोम्येद-मग्र आसीदित्यस्य सद्रूपकारणसम्भावनार्थत्वादेव तत्सिद्ध्यर्थं तद्धैक आहुरित्यादिना सत्कार्य्यवादो निरस्तः। अन्यथा सिद्धस्य सतोऽद्वितीयत्वमात्रविवक्षायां तस्याप्रस्तुतत्वप्रसङ्गात्। अस्मिन्नपि व्याख्याने कारणस्याद्वितीयत्वादिवचसा तदन्यस्य मृषात्वमपि सि-ध्यति। कार्य्यं सन्मयत्वे तन्निरूपितं कारणत्वमपि तथैति। तथा-विधात्मज्ञानान्मुक्तिरपि वक्ष्यमाणा सिध्यतीति न किञ्चिदवद्यं। दीपिकायान्तु इदमात्मैवासीदिति सामानाधिकरण्यबाधायां यश्चौरः स स्थाणुरितिवदिदानीं जगदधिष्ठानप्रतिभासेन तत्र बाधानुपपत्त्या त्रैकालिकसम्बन्धिवाचकशब्देन सृष्टेः प्राचीनः काल उपादीयते। लक्षप्रपञ्चबाधया सिद्धस्याखण्डैकरसत्वस्य स्पष्टीकरणार्थमेकादिशब्दा इति न कस्याप्यानर्थक्यमित्युक्तं। तत्रा-ऽयमन्द्स्य न प्रयोजनमारोप्य प्रतीतिदशायामेव यश्चौरः स स्थाणुरित्यादौ बाधदर्शनेनेहापि जगत्प्रतीतिदशायामेव तद्बाध-नस्य न्याय्यत्वात् सृष्टेः प्राक्प्रतीतस्य बाधानुपपत्तेश्च। किञ्च कालत्र-यनिषेधो हि बाधः प्राक्काल एवेति निषेधे बाध एव न स्यात्।

ऐ॰उ॰ स ईक्षत लोकान् नु सृजा इति ॥ १ ॥

---

ऐ॰भा॰ दपि वस्तु विद्यते । किन्तर्ह्यात्मैक एव आसीदित्यभिप्रायः । स सर्वज्ञस्वाभाव्यादात्मा एकः सन्नैक्षत । ननु प्रागुत्पत्तेरकार्यकारणत्वात् कथमैक्षितवान् । नायं दोषः । सर्वज्ञस्वाभाव्यात् । तथा च मन्त्रवर्णः । अपाणिपादो

---

आ॰ नि प्रागभावे घटे पूर्वं न दृष्टो घट इति प्रत्ययबाधं मन्यन्ते । अत एव भाष्ये प्रागुत्पत्तेर्व्याकृतनामरूपभेदात्मभूतं जगदासीदिति जगतः कारणात्मना सत्त्वोक्तिः न तु बाध इति । न च घटो प्रागभावेनाऽऽस्य इति कालसम्बन्धायोग इति वाच्यं । प्रागभावे घटशरावादिकं मृदेवासीदित्यादिवाक्येषु कालसम्बन्धेनैव बोधनस्य व्युत्पन्नत्वेनेहापि तथैव बोधयितुं कालसम्बन्धारोपोपपत्तेः । यथा देवदत्तस्य शिर इत्यादावयवावयविभेदेन बोधनस्य दृष्टत्वेन राहोः शिर इत्यादावपि तत्कल्पनं । यथा वा पूर्वकालेऽपि काल आसीदित्यादौ कालान्तरसम्बन्धारोपस्तद्वत् । दीपिकायान्तु परकीयापदो बोधनीय इति न्यायेन परस्मै तत्कालस्य नित्यत्वेन प्रागपि सत्त्वात्तदीया कालसम्बन्धोक्तिरित्युक्तं । न चात्मा वा आसीदिति सत्तावैशिष्ट्यमेव प्रतीयते कर्तुः क्रियाश्रयत्वादिति वाच्यं । सविता प्रकाशत इत्यादौ कर्तृवाचिप्रत्ययस्य धातूपात्तार्थत्वेन सवितुःप्रकाशरूपत्वप्रत्ययवदात्मन एव सद्रूपत्वप्रतीतेः । अतिरिक्तसत्ताजात्यभावाच्चान्यथा सत्तासीदित्यादावसत्तेरिति सर्वं सुस्थं ।

एवं सृष्टेः प्रागात्मनोऽद्वितीयैकरसत्वं साधयितुमुपक्षिप्तं प्रपञ्चस्य मृषात्वं तदध्यारोपापवादाभ्यां स्फुटीकर्तुमध्यायप्रवेशः । तथाप्यध्यारोपार्थं स जातो भूतानीत्यादि प्राकृतवादादिरूपवादार्थः । तत्रापि वाचारम्भणन्यायेनात्मातिरिक्तस्य विकारस्य मृषात्वं वस्तु दर्शयितव्यं । तत्र सृष्टेरात्मनः सर्वात्मत्वं चेतनत्वं स्फुटीकर्तुमीक्षणमाह । स ईक्षतेति । नन्वेकस्यासहायस्य कथमीक्षणं साधनाभावादित्याशङ्क्य न तस्य साधनापेक्षेत्यभिप्रेत्याह सर्वज्ञस्वाभाव्यादित्युक्तमनाद्यज्ञानस्वाभाव्यच्छान्दसः ।

ऐ॰भा॰ जवनो ग्रहीता इत्यादिः । केनाऽभिप्रायेणेत्याह । लोकानम्भःप्रभृतीन् प्राणिकर्मफलोपभोगस्थानभूतान् सृजे सृजेयमिति । एवमीक्षित्वाऽऽलोच्य स आत्मा इमाँल्लोकानसृजत सृष्टवान् ॥ २ ॥

---

आ॰ अभिप्रायं शङ्कापरिहाराभ्यां स्फुटीकरोति । नन्विति । अत्र करणानीन्द्रियाणि कार्य्यं शरीरमिति विवेकः । तद्रहितस्यापि सार्व्वज्ञ्ये श्रुतिमाह । तथा चेति । अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तमिति मन्त्रशेषः । न तस्य कार्य्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधोऽनुभूयते स्वाभाविकी ज्ञानबलक्रियापि चेत्यादिरादिशब्दार्थः । ननु स्वाभाविकनित्यचैतन्येन कथं कादाचित्केक्षणमिति । अत्र केचित् सर्गादौ प्राणिकर्म्मभिरेका वृत्त्याकाराऽविद्यावृत्तिरुत्पद्यते । तस्यामात्मचैतन्यम् प्रतिबिम्बितं तदेवेक्षणं वियदादिकार्य्यत्वात् स्वपरनिर्व्वाहकमिति न तथापीक्षणान्तरापेक्षा सर्व्वेष्वपि प्रथमकार्य्येऽनवस्थापरिहारायैवमेवेष्टव्यमित्याहुः । अपरे तु प्राणिकर्म्मवशात् सृष्टिकालेऽभिव्यक्त्युन्मुखीभूतानभिव्यक्तनामरूपावच्छिन्नं सत्स्वरूपचैतन्यमेवोन्मुखस्य कादाचित्कत्वात् कदाचित् कर्म्मेक्षणमित्याहुः । अन्ये त्वीक्षणवाक्यस्य कारणस्याचेतनत्वव्यावृत्तिपरत्वादीक्षणे तात्पर्य्याभावाच्च न तत्र भूयानाग्रहः कर्त्तव्य इत्याहुः । नु शब्दो वितर्कार्थ इति मनसि निधायाह । न्विति । लोटस्तदर्थस्य विध्यादेः स्रष्टर्यसम्भवात् लोटो लडर्थत्वमाह । सृजे इति । अहमितीक्षितेति पूर्व्वेणान्वयः । ईक्षणस्य पूर्व्वकालीनत्वं वदन् सृष्टिहेतुत्वमाह । एवमिति ॥ २ ॥

ऐ०भा० दात्मभूतनामरूपोपादानः सन् सर्व्वज्ञो जगन्निर्मिमीत इति न विरुद्धं । अथवा यथा विज्ञानवान्मायावी निरुपादान आत्मानमेवात्मान्तरत्वेनाकाशे गच्छन्तमिव निर्मिमीते तथा सर्व्वज्ञो देवः सर्व्वशक्तिर्महामाय आत्मानमेवात्मान्तरत्वेन जगद्रूपेण निर्मिमीत इति युक्ततरं । एवञ्च सति कारणकार्य्योभयासद्वादादिपक्षाश्च न प्रसज्यन्ते सुनिराकृताश्च भवन्ति । कांल्लोकानसृजतेत्याह ।

---

आ० आत्मन एवोपादानत्वं । माया तु सहकारिमात्रमित्यभिप्रेत्यात्मनि चैवं विचित्राश्च हीति द्वितीयस्य प्रथमपादे सूत्रोपक्रमेण परिहारान्तरमाह । अथवेति । विज्ञानवानित्यादिनाकाशेन गच्छन्तमिव भिन्नमात्मान्तरं ख्यापयतीति मायावानित्यर्थः । इदञ्च विशेषणमीश्वरस्य सद्रूपस्य च शुक्तिरजतादौ विवर्त्ते सदर्शनात् कार्य्यस्य तद्रूपत्वेन सदुभयं न स्यादिति शङ्कानिरासार्थं तन्निरासश्च मायाविनिर्म्मिते विवर्त्ते तदुभयदर्शनादिति । निरुपादान इति बाह्यनिमित्तोपादानरहित इत्यर्थः । सर्व्वशक्तित्वे हेतुमाह । महामाय इति । आत्मान्तरत्वेनेत्यात्मभिन्नत्वेनेत्यर्थः । युक्ततरमिति इन्द्रो मायाभिः पुरुरूप ईयते मायया त्वन्यदिव भवति बहु स्यां प्रजायेय, वाचारम्भणं विकारः, मायामात्रमिदमित्यादिबहुश्रुतिसम्मतत्वादित्यर्थः । एवञ्च सति सत एवात्मनः कारणकार्य्यरूपेणावस्थानादकारणान्निर्हेतुकमेव कार्य्यमुत्पद्यत इति यदृच्छावादिनां । असदेव कार्य्यमुत्पद्यत इति नैयायिकानां । उभयमप्यसदिति शून्यवादिनां पक्षः । आदिशब्देन सदेव कार्य्यमुत्पद्यत इति साङ्ख्यादीनां परिणामपक्ष उक्तः । असत्कार्य्यपक्षे त्वसतः सत्त्वापत्तिः शशविषाणादेरुत्पत्तिप्रसङ्गश्च दोषः । परिणामवादे च सतः पूर्व्वमेव कारणे सत्त्वात् कुलालादिकारकव्यापारवैयर्थ्यं पूर्व्वमसत्त्वे कारणस्यैवावस्थान्तरापत्तिलक्षणपरिणामत्वानु-

ऐ॰उ॰ द्यौः प्रतिष्ठाऽन्तरिक्षं मरीचयः । पृथिवी म-
रो या अधस्ताता आपः॥ २ ॥

---

ऐ॰भा॰ अम्भो मरीचीर्मरमाप इति । आकाशादिक्रमेणाण्डमु-
त्पाद्याम्भःप्रभृतीँल्लोकानसृजत । तानम्भःप्रभृतीन् स्वय-
मेव व्याचष्टे श्रुतिः । अदस्तदम्भःशब्दवाच्यो लोकः परेण
दिवं द्युलोकात्परेण परस्तात् सोऽम्भःशब्दवाच्यो लोकः ।
अपाम्भरणात् । द्यौः प्रतिष्ठाऽऽश्रयस्तस्याम्भसो लोकस्य ।
द्युलोकादधस्तादन्तरिक्षं यत्तन्मरीचयः । एकोऽप्यनेकस्था-

---

व्या॰ पपत्तिः । उत्पत्त्यनन्तरमसत्त्वे ततो यवक्षारादावसिद्धिरूपदोषस्यानु-
पपत्तिश्च दोषः । उभयासत्त्वे चोभयपक्षोक्तदोषः । ते विवर्तवादेन
प्रसज्यन्त इत्यर्थः । यदाऽस्माभिर्विवर्तवादस्याङ्गीकारात् परिणामा-
दिपक्षानङ्गीकारे प्रथमपक्षाङ्गीकारलक्षणो दोषो न सम्भवतीत्याह ।
एवञ्च सतीति । इति निराकृतत्वेऽपि विवर्तवादस्यैव परिग्रहे पक्षा-
न्तरेषु दोषबहुलत्वादद्वितीयात्मनस्तद्विपरीतप्रपञ्चाकारेणाभिधा-
यिन्या बहु स्यामिति श्रुत्या विवर्तवादस्यैव परिगृहीतत्वेन पक्षा-
न्तराणां श्रुतिबाह्यत्वाच्च ते निरस्ता भवन्तीत्यर्थः । लोकानां
भौतिकत्वादण्डान्तर्वर्तित्वाच्च भूतसृष्टितत्पञ्चीकरणाण्डसृष्ट्यनन्तरं
तत्सृष्टिरिति सृष्ट्युपसंहारन्यायमाश्रित्याह । आकाशादीति ।
स्वयमेव व्याचष्टे श्रुतिः । तेषां लोकेष्वप्रसिद्धत्वादित्यर्थः । द्युलो-
कात्परस्तादुपरि महरादयो लोका यश्च तस्याम्भसो लोकस्याश्रयो
द्युलोकस्ते सर्वेऽम्भःशब्देनोच्यन्ते । अप्सु प्रभूतत्वाच्च विद्यमानत्वा-
दित्याह । अद इति । अन्तरिक्षं मरीचयः इत्यस्यार्थमाह ।
द्युलोकादिति । मरीचिशब्देन सूर्यकिरणसम्बन्धादन्तरिक्षलोकं
लक्षयित्वा तस्यैकत्वेऽपि प्रदेशभेदाद्बहुवचनं युक्तं इदानीं बहूनां
मरीचीनां तदात्मत्वात्कृतबहुत्वं भङ्ग्या योग्य इत्यत्र लाक्ष-
णिकमहत्त्वमिवेत्याह । मरीचिभिर्वेति । ननु मरीचिशब्दे-
नान्तरिक्षलोकस्वीकारे मरीचिसम्बन्धो निमित्तान्तरमुच्यत इति

ऐ॰भा॰ न भेदत्वाद्बहुवचनभाक्। मरीचिभिर्वा रश्मिभिः सम्बन्धात् पृथिवी मरो म्रियन्तेऽस्मिन् भूतानीति। या अधस्तात् पृथिव्यास्ता आप उच्यन्ते। आप्नोतेर्लोकाः। यद्यपि पञ्चभूतात्मकत्वं लोकानां तथापि अब्बाहुल्यादब्नामभिरेवाम्भो मरीचीर्मरमाप इत्युच्यते ॥ २ ॥

---

आ॰ अमितथं। एतद्भिन्नस्य निमित्तस्य पूर्वमनुक्तत्वेन विकल्पार्थत्वा शब्दार्थमादाय उच्यन्त इत्यधोलोकवासिभिर्व्याप्यमान-त्वादाप्नोतेर्धातोरर्थयोगात्ते लोका आप इत्युच्यन्त इत्यन्वयः। ननूक्तानां पञ्चभूतसम्बन्धाविशेषात्कथमन्तरेण पृथिव्यादीनामुप-रितनलोका उच्यन्ते अन्तरिक्षस्य मरीच्यतिरिक्तपदार्थान्तरेण मेघादिनापि सम्बन्धात्तेन स लोकः पृथिव्यास्ततोऽधो लोकानाञ्च मरत्वापत्त्यतिरिक्तगमनादिक्रियान्तरेणैव आप्तत्वामिति प्रश्ने। यद्यपीति। भूतात्मकत्वमिति भूतसम्बन्धित्वमित्यर्थः। इदमुपल-क्षणं मेघादिपदार्थान्तरसम्बन्धोऽपि वर्तत इति द्रष्टव्यं। अम्भ आदीनामेव तेषु लोकेषु प्राचुर्यात्तैरेव ते लोका व्यपदेश्याः। प्रा-चुर्येण व्यपदेशा भवन्तीति न्यायादिति परिहरति। तथा-पीति। अब्बाहुल्यादित्युपलक्षणं मरीच्यादीनामपि बाहुल्या-दित्यपि द्रष्टव्यं। अब्नामभिरित्यनापि मरीच्यादिनामभिरित्यपि द्रष्टव्यं। यथा श्रुते अब्बाहुल्यत्वेनाम्भआदिशब्दवाच्यत्वानुपपत्तेर्लो-कानां यथानुपपत्तेर्मरीच्यादीनामब्नामत्वाभावादप्यम्भस्त्वाप्या-प्तिक्रियार्थयोगैरब्नामत्वाभावेनाप्नामभिरिति परिहारानुप-पत्तेरुपरितनलोकान् दृष्टिद्वारेणाम्भस्त्वम् इत्यादिभिः साक्षा-दुपलभ्यते न तु भूतान्तरमिति। अथवा दृष्ट्या अब्बाहुल्यमुपरित-नलोकानामूर्ध्वलोकगामिप्राण्यपेक्षया अधोलोकगामिनां प्राणिनां पुराणेषु बाहुल्योक्तेरब्नामभिरप्युच्यन्ते अधोलोका इत्यधोलोकेषु त-त्स्पृष्टाकारेऽपि बाहुल्यं पृथिव्यामतिशयं प्राणिनां मरत्वात्तस्यापि तत्र बाहुल्यं अन्तरिक्षस्य तु मरीचिबाहुल्यं प्रति सिद्धमेवेति शेषं अम्भो मरीचिर्मरमाप इत्यत्र इत्येतैर्नामभिरुच्यन्ते ॥ २ ॥

ऐ॰उ॰ स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति। सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्छयत् ॥ ३ ॥

---

ऐ॰भा॰ सर्वप्राणिकर्मफलोपादानाधिष्ठानभूतान् चतुरो लोकान् सृष्ट्वा स ईश्वरः पुनरेवेक्षत। इमे न्वम्भःप्रभृतयो मया सृष्टा लोकाः परिपालयितृवर्जिता विनश्येयुः। तस्मादेषां रक्षणार्थं लोकपालान् लोकानां पालयितॄन् सृजेऽहमिति। एवमीक्षित्वा सोऽद्भ्य एवाप्प्रधानेभ्यः पञ्चभूतेभ्यो येभ्योऽम्भःप्रभृतीन् सृष्टवान् तेभ्य एवेत्यर्थः। पुरुषं पुरुषाकारं शिरःपाण्यादिमन्तं समुद्धृत्याद्भ्यः समुपादाय मृत्पि-

---

आ॰ आत्मा वा इदमग्र इत्यनेन संसारी मोचयितव्यत्वेन विवक्षितः। असंसारिणो मोक्षानुपपत्तेः। संसारश्च संसरणाधिकरणलोकान् तदुपाधिभूतं लिङ्गशरीरं तदभिमानिनो देवान् तदधिष्ठानं स्थूलशरीरं संसाररूपामशनायादीन् तदभिमानिनं तद्भोक्तारमन्तरेण नोपपद्यत इति तस्य सृष्टिमप्रमाणस्य इत्यन्तेन ग्रन्थेन क्रमेण वक्तुम् संसरणाधिष्ठानलोकसृष्टिमुक्त्वा तत्पालयितृदेवताशरीरावयवद्वारा समष्टिस्थूलशरीरस्य समष्टिलिङ्गशरीरस्य तदभिमानिनो देवानाञ्च सृष्टिं वक्तुमारभते। स ईक्षतेति। तद्व्याचष्टे। सर्वप्राणीति। फलस्य तदुपादानस्य तत्साधनस्य चाधिष्ठानभूतानीत्यर्थः। अव्ययानामनेकार्थत्वान्नुशब्दस्तु शब्दार्थो। वैलक्षण्यं लोकानामाह। इमे न्विति। अहमितीत्यस्य ऐक्षतेति पूर्व्वेणान्वयः। समष्टिलिङ्गशरीरतदभिमानिनां विराडवयवजन्यत्वात्तदर्थं विराट्सृष्टिमाह। एवमीक्षित्वेति। यद्यपि लोकोत्पत्तेः पूर्व्वमेवाण्डोत्पत्तिरुक्ता अण्डमुत्पाद्याम्भःप्रभृतीन् लोकानसृजतेति भाष्यकारेण तथापि सैवोत्पत्तिरिहानूद्यते लोकपालसृष्ट्यर्थमिति न विरोध इति भावः। अद्भ्य एवेत्येतस्यार्थमाह। येभ्य इति। कुलालः पृथिव्याः सकाशान्मृत्पिण्ड-

ऐ॰उ॰ तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डं मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुरक्षिणी निरभिद्येतां अक्षिभ्याञ्चक्षुश्चक्षुष आदित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशस्त्वङ्निरभिद्यत

---

ऐ॰भा॰ मिव कुलालः पृथिव्याः समूर्छयत् संमूर्छितवान् सम्पिण्डितवान् स्वावयवसंयोजनेनेत्यर्थः ॥ ३ ॥

तं पिण्डं पुरुषविधमुद्दिश्याभ्यतपत् तदभिध्यानं सङ्कल्पं कृतवानित्यर्थः । यस्य ज्ञानमयं तप इति श्रुतेः । तस्याभितप्तस्येश्वरसङ्कल्पेन तपसाभितप्तस्य पिण्डस्य मुखं निरभिद्यत मुखाकारं सुषिरमजायत । यथा पक्षिणोऽण्डं निरभिद्यत । एवं तस्मान्निर्भिन्नान्मुखाद्वाक्करणमिन्द्रियं निरवर्तत तदधिष्ठाताग्निस्ततो वाचो लोकपालः । तथा

---

आ॰ मिवेत्यन्वयः । स्वावयवेति । भूतानां परस्परावयवसंयोजनेनेति श्लिष्टिः संयोजनं तेनेत्यर्थः । ३ ।

विराडुत्पत्तिमुक्त्वा तदवयवेभ्यो लोकपालोत्पत्तिमाह । तं पिण्ड- मित्यादिना । तपःशब्देनाभिध्यानमभिहितं प्राप्यमुच्यते न कृच्छ्रादीत्यत्र श्रुतिमाह । यस्येति । यस्य तपो ज्ञानमेव न कृच्छ्रादीत्यर्थः । ततो वाचो लोकपालोऽग्निर्वागधिष्ठाता निरवर्ततेत्यन्वयः । यद्यपि यागादिकारकजातं यपयोक्तभूतकार्यं न मुखादिगोलककार्यं तथापि मुखाद्याश्रये तदभिव्यक्तेर्मुखाद्वागित्युक्तं । नासिकाभ्यां प्राण इत्यत्र प्राणशब्देन प्राणवायुसहितं घ्राणेन्द्रियमुच्यते । अधि- ष्ठानमिति गोलकमित्यर्थः । त्वगोलकं लोमेति । लोमसहचरितं स्पर्शनेन्द्रियमुच्यते । ओषधिवनस्पतय इति लोकपाला अधिष्ठातारे-

ऐ०उ० त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमा नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः ॥ ४ ॥ इति प्रथमः खण्डः ॥ १ ॥

---

ऐ०भा० नासिके निरभिद्येतां। नासिकाभ्यां प्राणः प्राणाद्वायुरिति सर्व्वत्राधिष्ठानं करणं देवता च त्रयं क्रमेण निर्भिन्नमिति। अक्षिणी कर्णौ त्वक् हृदयमन्तःकरणाधिष्ठानं। मनोऽन्तःकरणं। नाभिः सर्व्वप्राणनिबन्धनस्थानं। तस्मादपानसंयुक्तत्वादपान इति पाय्विन्द्रियमुच्यते। तस्याधिष्ठात्री देवता मृत्युर्यथान्यत्र तथा शिश्नं निरभिद्यत

---

आ० यतो वायुरुत्पन्नः। भिन्नस्य भेदो हृदयं। हृदयशब्दाद्धृदयस्थेन्द्रियो हृदयशब्दस्यान्तःकरणार्थत्वदर्शनान्मनःशब्देनापि तस्यैवाभिधाने पौनरुक्त्यमित्यत आह। हृदयमिति। अन्तःकरणाधिष्ठानं हृदयकमलमुच्यत इत्यर्थः। सर्व्वप्राणनिबन्धनस्थानमिति गुदामूलमित्यर्थः। अपानशब्देन पाय्विन्द्रियलक्षणायां सम्बन्धमाह। अपानेति। ननु शिश्नं निरभिद्यतेति पर्याये शिश्नरेतसोरुत्पत्त्यभिधाने स्त्रीयोन्यादेरुत्पत्तिरनुक्ता स्यादित्याशङ्क्य शिश्नशब्देनोपस्थेन्द्रियस्थानं लक्ष्यते। रेत इति तदिन्द्रियगोचरत्वेन तत्सृष्टिसमुपस्थेन्द्रियं। अप्शब्देन तल्लक्षितमप्भूतोपाधिकः प्रजापतिरोऽच्यत इत्याह। यथेति। यथाऽन्यत्र पर्यायान्तरे स्थानं करणं देवता चेति त्रयमुक्तं एवमिहापि शिश्नादिशब्दैस्त्रयमप्युच्यत इत्यर्थः। रेत इति। इन्द्रियमुच्यत इत्यन्वयः। तल्लक्षणायां सम्बन्धमाह। सह रेतसेति। रेतसा सहितं तत् संबद्धमित्यर्थः।

ऐ॰भा॰ सत्याद्यात्मगुणपाथेयपूर्णज्ञानोडुपे सत्सङ्गसर्वत्याग-
मार्गे मोक्षतीरे एतस्मिन्महत्यर्णवे प्रापतन् पतितवन्तः ।
तस्मादग्न्यादिदेवताप्यलक्षणापि या गतिर्व्याख्याता ज्ञान-
कर्मसमुच्चयानुष्ठानफलभूता सापि नालं संसारदुःखोप-
शमायेत्ययमत्र विवक्षितार्थः ।

---

आ॰ नित्यसुखलेशरूपो विश्रामो यस्मिन् पञ्चेन्द्रियाणामर्थेषु विषयेषु
शब्दादिषु या तृष्णा सा एव मारुतस्तत्कृतो यो विक्षोभ-
स्तेनोत्थितान्यनर्थशतानि विषयसम्बन्धादिरूपक्लेशाख्य एवोर्मयो
यस्मिन् महारौरवादय एवमेवैते निरया नरकविशेषास्तद्-
तानां गर्भवासजन्मव्याधिजराबाल्यादयो महाग्राहा येऽनेके निरया
दुःखजनकत्वात्तदात्मनस्तानि हा चेत्यादीनि कूजितानि स-
म्यञ्जनय आक्रोशनानि महाध्वनयः तदुद्भूतो महारवो यस्मिन्।
महापातकाद्यनेकनिरयेति पाठे महापातकजन्या निरया इति
द्रष्टव्यं। संसारार्णवस्यैवम्भूतत्वे तस्य तरणासम्भवमाशङ्क्य तस्यान-
र्थस्याविवेकिनां तथात्वेऽपि विवेकिनां तत्तरणोपायोऽस्तीत्याह ।
सत्येति॥ सत्यादयो ये आत्मगुणास्त एव पाथेयं पथ्यदनं तेन
पूर्णं ज्ञानमेवोडुपः प्लवो यस्मिन् । सत्सङ्गः सन्न्यासः स एव मार्गो
ज्ञानोडुपप्रवृत्तिहेतुर्यस्मिन् मोक्षे सति पुनः संसारार्णवस्पर्शा-
भावात् स एव तीर्त्वा तीरं यस्मिंस्तस्मिन् प्रत्यक्सिद्धेऽर्णव
इत्यर्थः । अत्र पतनं नाम स्वरूपाज्ञानेन संसारेऽहमभिमा-
नेन स्थानं । ननु संसारार्णवपतितत्वं अन्नमात्राशनायादियोग
इत्यादि सर्वोऽपि तन्नस्तदभिमानिनो जीवस्य यतश्च न
देवतानां । न च तासामपि तत्राभिमानोऽस्तीति तदुक्तमिति
प्रष्टव्यं । तथापि प्राधान्यतोऽभिमानिनं जीवं विहाय गौणा-
न्यतोऽभिमानिनीषु तदुक्तेरभिप्रायो वक्तव्य इत्यत आह । तस्मा-
दिति । यस्मात् संसारार्णवपतितत्वं तासां तस्मादित्यर्थः ॥

ऐ०उ० प्रापतंस्तमशनायापिपासाभ्यामन्ववार्जत् ।

---

ऐ०भा० यत एवं तस्मादेवं विदित्वा परं ब्रह्मात्मात्मनः सर्व्वभूतानाञ्च यो वक्ष्यमाणविशेषणः प्रकृतश्च जगदुत्पत्तिस्थितिसंहारहेतुत्वेन सर्व्वसंसारदुःखोपशमनाय वेदितव्यस्तस्मादेव पन्थाः । एतत् कर्म्मैतद्ब्रह्मैतत् सत्यं यदेतत् परब्रह्मात्मज्ञानं । नान्यः पन्था विद्यतेऽयनायेति मन्त्रवर्णात् । तं स्वात्मकरणदेवतोत्पत्तिबीजभूतं पुरुषं प्रथमोत्पादितं

---

ध्या० महावीरस्वाध्यायैकनिरयविरेवेति पाठे अस्माभिरप्यो गतिर्या दुःखोपशमनाय ज्ञानं तथा वापि ज्ञानमिति पूर्व्वेणान्वयः । तदिदमाह । यत एवमिति । एवं विदित्वेति ज्ञानमिति विदित्वेत्यर्थः । आत्मनः सर्व्वभूतानाञ्चात्मा य आत्मा वा इदमित्यादिना जगदुत्पत्त्यादिहेतुत्वेन च यः प्रकृतः स परब्रह्म वेदितव्य इत्यन्वयः । तस्मेव पन्थाः एतत्कर्म्मैतद्ब्रह्मैतत् सत्यमित्युपक्रम्योपनयमुपनयमिति वा इत्यादिना कर्म्मसम्बन्धिसगुणब्रह्मज्ञानस्यैवोक्तत्वात् तस्यैव मोक्षसाधनत्वं नोक्तमेवेत्यात आहानस्यैवात्यैव पन्था इत्यादि ब्रह्मात्मज्ञानमेवोक्तं न कर्म्मसमुच्चितं ज्ञानं । तस्योक्तज्ञानेन संसारहेतुत्वाभिधानेन सत्यमार्गादित्याह । तस्मादेव पन्था इति । यस्मात् कर्म्मसहितस्य प्राणविज्ञानस्य संसारफलत्वं तस्मादेव इत्युक्तेन पदेन यद्ब्रह्मात्मविज्ञानं तदेवोक्तमित्यन्वयः । तमेव विदित्वातिमृत्युमेति । नान्यः पन्था विद्यतेऽयनायेत्यनेनापि केवलात्मज्ञानव्यतिरिक्तपथनिषेधादयुक्तमेव ज्ञानं पन्था इत्याह । नान्य इति । एष पन्था इति प्रकारमारभ्य मध्ये प्राणविज्ञानोक्तिस्तु पादोपासनया चित्तैकाग्र्ये सति तत्प्रसादात् वैराग्ये सति एष पन्था इत्युपक्रान्तं मुख्यं ज्ञानं वक्तुं अयमभिप्रायेणेति भावः । यद्यप्येतदाख्यायिकावसरे कर्म्ममार्गोऽपि पथिशब्दार्थत्वेनोक्तस्तथापि ज्ञानमार्गापेक्षया स उक्तो न प्राधान्येनेति भावः । ननु

ऐ०उ० ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदामेति ॥ १ ॥

ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति।

---

शं०भा० पिण्डमात्मानमशनायापिपासाभ्यामन्ववार्जदनुगमितवान् संयोजितवानित्यर्थः। तस्य कारणभूतस्याशनायादिदोषवत्त्वात् तत्कार्य्यभूतानामपि देवतानामशनायादिमत्त्वं। तास्ततोऽशनायापिपासाभ्यां पीड्यमाना एनं पितामहं स्रष्टारमब्रुवन्नुक्तवत्यः। आयतनमधिष्ठानं नोऽस्मभ्यं प्रजानीहि विधत्स्व। यस्मिन्नायतने प्रतिष्ठिताः समर्थाः सत्योऽन्नमदाम भक्षयाम इति ॥ १ ॥

एवमुक्त ईश्वरस्ताभ्यो देवताभ्यो गवाकृतिविशिष्टं पिण्डं ताभ्य एवाद्भ्यः पूर्ववत् पिण्डं समुद्धृत्य मूर्च्छयित्वा आनयत् दर्शितवान्। ताः पुनर्गवाकृतिं दृष्ट्वाऽब्रुवन्। न वै

---

आ० पितुरस्याशनायादियोगे देवतानां कथं तद्वत्त्वं येन तासामन्नादनार्थमायतनप्रश्नः स्यात् यस्मिन् प्रतिष्ठिता इत्यनेनेत्यत आह। तस्येति। पितामहमिति सर्वजनकपितृजनकमित्यर्थः। अधिष्ठानमिति शरीरमित्यर्थः। ननु विराड्देह एवायतनं वर्तते इत्याशङ्क्य तस्यातिप्रौढत्वात्तमापूर्य्य तत्र स्थातुं वयमसमर्थाः। अथ च तद्देहमर्य्यादं सम्पादयितुमसमर्थाः। अतोऽस्मद्योग्यं व्यष्टिदेहं सृजस्वेत्युक्तवत्य इत्याह। यस्मिन्निति। यद्यप्यस्मदादिव्यष्टिदेहं विनापि चरुपुरोडाशादिहविरदनमस्ति तथापि तदपि हविरदनं व्यष्टिदेवतादेहमन्तरा नाप्नोतीति भावः ॥ १ ॥

व्यष्टिदेहसृष्टिमाह। ताभ्य इति। मूर्च्छयित्वेति निबिडतयावयवानां संयोजनेनेत्यर्थः। न योग्य इति। शरीरस्योपरि

ऐ॰उ॰ ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति ॥ २ ॥

ताभ्यः पुरुषमानयत् ता अब्रुवन् सुकृतं बतेति पुरुषो वाव सुकृतं। ता अब्रवीद्यथायतनं प्रविशतेति ॥ ३ ॥

---

ऐ॰भा॰ गोऽनन्तरमधिष्ठानायाश्वमानयत् पिण्डोऽयं। न वै अलं पर्याप्तं। न योग्य इत्यर्थः। गवि प्रत्याख्याते तथैवाश्वमानयत्। ता अब्रुवन्न वै नोऽयमलमिति पूर्ववत् सर्वप्रत्याख्याने ॥ २ ॥

ताभ्यः पुरुषमानयत् स्वयोनिभूतं। ताः स्वयोनिं पुरुषं दृष्ट्वाऽखिन्नाः सत्यः सुकृतं शोभनमिदमधिष्ठानं बतेत्यब्रुवन्। तस्मात् पुरुषो वाव पुरुष एव सुकृतं सर्वपुण्यकर्महेतुत्वात्। स्वयं वा स्वेनैवात्मना स्वमायाभिः कृतत्वात्सुकृतमुच्यते। ता देवता ईश्वरोऽब्रवीत्। इष्टमासामिदमधिष्ठानमिति मत्वा सर्वो हि स्वयोनिषु रमन्ते। अतो

---

आ॰ दन्ताभावेन दूर्वादिमूलच्छेदासामर्थ्यादित्यर्थः। अश्वमिति। तत्रोभयतो दन्तत्वेनोक्तदोषाभावादित्यर्थः। न वै नोऽयमलमित्यश्वस्यापि विवेकज्ञानाभावादयोग्यत्वादित्यर्थः। गवाश्वोपलक्षणम् सर्वतिर्यग्देहोपलक्षणमित्यभिप्रेत्याह। सर्वेति ॥ २ ॥

स्वयोनिभूतमिति। स्वयोनिभूतं विराट्पुरुषदेहसजातीयमित्यर्थः। यस्मात् स्वकीयपरितोषद्योतकेन सुकृतं बतेत्यनेन शब्देन पुरुषदेहमुक्तवत्यस्तस्मादिदानीमपि सुकृतत्वमित्याह। तस्मादिति। स्वयं कर्तृ ईश्वरेण स्वेनैव कृतं महदादिकृतानपेक्षया सुकृतं सुष्ठु कृतमित्यर्थः। पृषोदरादित्वात् स्वयमिति स्थाने सुशब्द इत्यर्थः। एवं अधिदेहदानमुक्त्वा तत्र कस्यां देवतानाम्

ऐ०उ० अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशंश्चन्द्रमा मनो भूत्वा हृदयं प्राविशन् मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशत् ॥ ४ ॥

---

ऐ०भा० यथाऽऽयतनं यस्य यदशनादिक्रियायोग्यमायतनं तत्प्रविशतेति ॥ ३ ॥

तथास्त्वित्यनुज्ञां प्रतिलभ्य ईश्वरस्य नगर्यामिव बलाधिकृताः। अग्निर्वागभिमानी वागेव भूत्वा स्वां योनिं मुखं प्राविशत्तथोक्तार्थमन्यत्। वायुर्नासिके। आदित्योऽक्षिणी। दिशः कर्णौ। ओषधिवनस्पतयस्त्वचं। चन्द्रमा हृदयं। मृत्युर्नाभिं। आपः शिश्नं प्राविशन् ॥ ४ ॥

---

आ० यथारूपेण प्रवेशमाह। ता देवता इति॥ इयत्त्वे हेतुमाह। सर्व्वे चेति॥ आयतनमिति गोलकरूपस्थानमित्यर्थः॥ ३॥

राज्ञोऽनुज्ञां प्रतिलभ्य बलाधिकृतादयः सेनापत्यादयो नगर्यां यथा प्रविशन्ति तद्वदीश्वरस्यानुज्ञां प्रतिलभ्याग्निः प्राविशदित्यन्वयः। यद्यपि वागभिमान्यग्निर्न तु वागेव तथापि तस्य वाचं विना प्रत्यक्षमनुपलब्धेः। तस्या अपि देवतां विना स्वविषयग्रहणसामर्थ्याभावात् तयोरेकलोलीभावेनाभेदोक्तिरित्याह॥ वागेवेति॥ यद्यपि देवतानामीश्वरेण प्रवेशश्चोदितस्तथापि करणैर्विना तासां साक्षाददनादिभोगासम्भवात् तेषामपि प्रवेशोऽर्थाच्चोदित एवेति तेषामपि स उक्तः॥ ४॥

ऐ॰उ॰ तमशनायापिपासे अब्रूतामावाभ्यामभिप्र-

---

ऐ॰भा॰ एवं लब्धाधिष्ठानासु देवतासु निरधिष्ठाने सत्याव-
शनायापिपासे तमीश्वरमब्रूतामुक्तवत्यौ आवाभ्यामधिष्ठा-
नमभिप्रजानीहि चिन्तय विधत्स्वेत्यर्थः। स ईश्वर एवमुक्त-
स्तेऽशनायापिपासेऽब्रवीत्। न हि युवयोर्भावरूपत्वाच्चेतनाव-
द्वस्त्वनधिष्ठायान्नादत्वं सम्भवति। तस्मादेतास्वेवाग्न्यादिषु
देवतास्वध्यात्माधिदेवतासु वां युवां आभजामि वृत्तिसंवि-

---

आ॰ अशनायापिपासयोरपि व्यष्टिदेहेऽपि कस्याधिष्ठातृदेवता-
यामन्नं वक्तुं तयोः प्रश्नमवतारयति। एवमिति। निरधिष्ठाने
सत्याविति कारणीभूते विराड्देहेऽधिष्ठानविशेषो यदि स्याद-
शनायापिपासयोरग्न्यादीनां मुखादय इव तदा व्यष्टिदेहेऽपि
तदेव स्यात् तयोरधिष्ठानं तेषामिव न तेऽवदस्ति अतो निरधि-
ष्ठाने ते इत्यर्थः। विधत्स्वेत्यनन्तरं यस्मिन् प्रतिष्ठिता अन्नम-
दामेति शेषः। तदधिष्ठानविशेषत्वाभावात् युवयोः कार्ये समष्टि-
देहेऽभावादिहापि नास्त्येव। कारणपूर्व्वकत्वात् कार्य्यस्याधिष्ठानं
स्यात्। यदन्तु युवयोर्धर्म्मरूपत्वाद्धर्म्मिणमनाश्रित्य धर्म्मस्य
स्वातन्त्र्यायोगाच्चेतनावद्धर्म्मिभूतदेवतागतमेवाऽऽश्रयणं युवयो-
रित्याह। स ईश्वर इति। भावरूपत्वादिति धर्म्मरूपत्वादि-
त्यर्थः। धर्म्मिणोऽप्यचेतनस्य भोक्तृत्वादर्शनाच्चेतनावदित्युक्तं।
अध्यात्मेति। अध्यात्मदेवता व्यष्टिदेहगतदेवताः। अधिदैवतदे-
वताः समष्टिविराड्देहगता हविर्भुजोऽग्न्यादयः प्रसिद्धास्ता-
स्वित्यर्थः। वृत्तीति भागैकदेशदानेनेत्यर्थः। एतदेव स्पष्टीकरोति।
एतासु भागिन्याविति। साक्षाद्देवतासु भागवत्त्वायोगाद्देवता-
भागेन भागवत्त्वमंशवत्त्वमुक्तमिति व्याचष्टे। यदिति। यद्दैवत्यो
यद्देवतासम्बन्धी यो भागः स्यात् तस्या देवतायाः सम्बन्धिना तेनैव
भागेनेत्यर्थः। हविरादीत्यादिशब्देन चक्षुरादीन्द्रियविषयोऽपि
गृह्यते। करोमीत्यनन्तरमुक्तेति शेषः। उक्तमर्थमिदानीन्तनव्यव-

ऐ॰उ॰ जानीहीति। स ते अब्रवीदेतास्वेव वां देवता-
स्वाभजाम्येतासु भागिन्यौ करोमीति। तस्मा-

---

ऐ॰भा॰ भागेनानुगृह्णामि। एतासु भागिन्यौ यद्देवत्यो यो
भागो हविरादिलक्षणः स्यात् तद्देवत्यास्तेनैवभागेन भागिन्यौ
भागवत्यौ वां करोमीति सृष्ट्यादावीश्वर एवं व्यदधात्
यस्मात् तस्मादिदानीमपि यस्मै कस्मै च देवतायै अर्थाय

---

आ॰ चरितेन सहीकर्तुं तस्मादित्यादिवाक्यं तद्व्याचष्टे। यस्मादिति।
यस्मात् सृष्ट्यादावेवं व्यदधात् तस्मादित्यर्थः। हविर्ग्रहणमुपलक्षणं
अधिदैवतं हविर्गृह्यते। अध्यात्मं देवतार्थं शब्दादिविषयो गृह्यत
इति योज्यं। भागिन्याविति यद्यपि शब्दादिविषयेण हविषा
चाग्न्यादिदेवतातृप्तौ तयोर्भागः स्वः दृश्यते न तु तद्भागेन भा-
गित्वं तथापि तयोः सर्वात्मना भावे पुनः कालान्तरे ते न
स्याताम्। अतः स्वरूपेण स्थितयोरेव तयोः कदाचिदिन्द्रियदेवतानां
विषयोन्मुखतया प्रेरकत्वरूपं कार्योन्मुखं कदाचित्तदभावरूपो-
पशान्तिरित्यभ्युपगन्तव्यं। तथा च हविषा देवतातृप्तावशनाया-
पिपासयोरपि तृप्तिरूपशान्तिर्दृश्यत इति तद्भागेन भागवत्त्वमु-
क्तमित्यर्थः। न च चक्षुरादिना रूपादिग्रहणदशायामशनाया-
पिपासयोः शान्तिर्दृश्यते इति न सर्वत्र भागवत्त्वं तयोरिति
वाच्यं। क्षुत्पिपासार्त्तस्यापमानदर्शनश्रवणादिनाऽपमानसत्वा-
सत्तिपरितोषेण मनसि तयोः शान्तेव भाति। न तु यथा पूर्वं
बाधत इति चक्षुरादिष्वपि तयोर्भागवत्त्वमित्युक्तं। शाङ्करीय
दीपिकायां वस्तुतस्त्वशनायापिपासाशब्देनेन्द्रियाणां स्वस्वविषय-
गोचरौ व्यापारावुच्येते। अन्नमदानीत्यन्नाद्यमादनं स्वस्वविष-
यग्रहणमेव चक्षुरादीन्द्रियदेवतानां मुख्याशादनासम्भवात्।
तथाच रूपादिविषयग्रहणे तत्तद्विषयगोचरयोस्तयोः पृथक्
तृप्तिर्दृश्यत इति वाच्यं। इन्द्रियदेवतानां स्वस्वविषयोन्मुखतया
प्रेरकत्वरूपकार्योन्मुखनिवृत्तिरूपोपशान्तिरेव पृथक् तयोस्तृप्ति-

ऐ०उ० यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्या-वेवास्यामशनायापिपासे भवतः ॥ ५ ॥ इति द्वितीयः खण्डः ॥ २ ॥

स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति ॥ १ ॥

---

ऐ०भा० हविर्गृह्यते चरुपुरोडाशादिलक्षणं भागिन्यौ एव भागवत्यावेवास्यां देवतायामशनायापिपासे भवतः ॥५॥ इति द्वितीयखण्डभाष्यं ॥ २ ॥

स एवमीश्वर ईक्षत ईक्षत । कथमिमे नु लोका लोकपालाश्च मया सृष्टा अशनायापिपासाभ्यां च संयोजिताः । अतो नैषां स्थितिरन्नमन्तरेण तस्मादन्नमेभ्यो लोकपालेभ्यः सृजै सृजे इत्येवं हि लोके ईश्वराणामनुग्रहे निग्रहे च स्वातन्त्र्यं दृष्टं स्वेषु तद्वन्महेश्वरस्यापि सर्व्वेश्वरत्वात् सर्व्वान् प्रति निग्रहानुग्रहे स्वातन्त्र्यमेव ॥ १ ॥

---

भा० इत्युक्तत्वात् । यद्यप्यर्थप्रवेशनमशनायापिपासादिमत्त्वं तन्नि-मित्तमन्नादनमित्यादि सर्व्वं कार्य्यकरणसङ्घातपञ्जराध्यक्षस्य जी-वस्य भोक्तुरेव नेन्द्रियदेवतानामशनायापिपासादीनां । तथापि तस्य वस्तुतोऽभोक्तृब्रह्मभूतस्य स्वतो भोक्तृत्वायोगादिन्द्रियदेवता-द्युपाधिकृतमेव तस्य भोक्तृत्वादिसर्व्वसंसार इति वक्तुं तेष्वेव तमारोप्य श्रुत्योच्यत इति न दोषः ॥ ५ ॥ इति द्वितीयखण्ड-भाष्यटीका ॥ २ ॥

एवं भोग्यप्रपञ्चसृष्टिमुक्त्वा भोग्यसृष्टिं वक्तुमारभते । स एवमिति । नुशब्दोक्तं वितर्कं स्पष्टीकरोति । लोका इत्यादिना । पूर्व्ववल्लोकपालप्रार्थनां विना स्वयमेवान्नं स्रष्टुं वितर्कितवानि-त्युक्तेः प्रयोजनमीश्वरस्याप्तमित्याह । सृजा इति ॥ १ ॥

ऐ॰उ॰ सोऽपोऽभ्यतपत् ताभ्योऽभितप्ताभ्यो मूर्तिरजायत । या वै सा मूर्तिरजायतान्नं वै तत् ॥२॥ तदेतदभिसृष्टं नदत् पराङत्यजिघांसत् त-

---

शां॰भा॰ स ईश्वरोऽन्नं सिसृक्षुः स एव पूर्वोक्ता अप उद्दिश्याभ्यतपत् ताभ्योऽभितप्ताभ्य उपादानभूताभ्यो मूर्तिर्घनरूपं धारणसमर्थं चराचरलक्षणमजायतोत्पन्नं अन्नं वै तन्मूर्तिरूपं या वै सा मूर्तिरजायत तदेतदन्नं ॥ २ ॥

लोकपालानामभिमुखेनोत्सृष्टं सत् यथा मूषकादिर्मार्जारादिगोचरे सन् मम मृत्युरत्ताद इति मत्वा परागञ्च-

---

आ॰ अप इति पञ्च भूतानीत्यर्थः । सोऽभ्यतपदिति तेभ्यो भूतेभ्यो मनुष्यादीनामन्नभूता व्रीह्यादयो जायन्तां मार्जारादीनामन्नभूतानि मूषकादीनि जायन्तामिति पर्यालोचनं सङ्कल्पं कृतवानित्यर्थः । मूर्तिशब्देन चराचरत्वादिमतो विधाने व्रीह्यादेरग्रहणं स्यादत आह । घनरूपमिति । कठिनमित्यर्थः । तन्मूर्तानामपि वायुचन्द्रकिरणादीनामपि सर्पादीन् प्रत्यन्नत्वमस्तीति तद्व्युदासार्थमाह । धारणसमर्थेति । शरीरधारणसमर्थमित्यर्थः । चरेति चरं मूषिकादि अचरं व्रीह्यादीत्यर्थः । या वै सा मूर्तिरजायतान्नं वै तदिति पूर्ववदन्वयः । तच्छब्दार्थमाह । मूर्तिरूपमिति । शब्दादिभोक्तृत्वमिन्द्रियदेवतोपाधिकं न स्वत आत्मन इत्यभिप्रायेण तेषां शब्दादिभोगमुक्त्वा इदानीमन्नपानभोक्तृत्वमप्यपानवृत्तिमत्प्राणोपाधिकं न स्वत आत्मन इत्यभिप्रायेण तस्य भोक्तृत्वं प्रतिश्रेयान्निर्धारयितुमाह । तदेतदिति ॥ २ ॥

एवं सत्पराङ् सत् अजिघांसदित्यन्वयः । पराङ्पदं व्युत्पादयति । परागञ्चतीति । उक्तार्थे दृष्टान्तमाह । यथेति । यथेत्यनन्तरं पराङ्स्यति तद्वदिति शेषः । अतिगन्तुमैच्छदिति । यद्यपि व्रीह्याद्यचेतनमन्नस्य नैवमिच्छा सम्भवति तथापि भोक्तृ-

ऐ॰उ॰ द्वाचा जिघृक्षत्तन्नाशक्नोद्वाचा ग्रहीतुं । स यद्धै-नद्वाचाऽग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत् ॥ ३ ॥ तत् प्राणेनाजिघृक्षत् तन्नाशक्नोत् प्राणेन ग्रहीतुं । स यद्धैनत्प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत् ॥ ४ ॥ तच्चक्षुषाऽजिघृक्षत् तन्नाशक्नोच्चक्षुषा ग्रहीतुं । स यद्धैनच्चक्षुषाऽग्रहैष्यद्दृष्ट्वा हैवान्नमत्रप्स्यत् ॥ ५ ॥ तच्छ्रोत्रेणाजिघृक्षत् तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुं । स यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत् ॥ ६ ॥

---

ऐ॰भा॰ तीति पराङ् तदन्नमतीत्याजिघांसदतिगन्तुमैच्छत् पालयितुं प्रारभत इत्यर्थः । तदन्नाभिप्रायं मत्वा स लोक-लोकपालसंघातः कार्य्यकारणलक्षणः पिण्डः प्रथमज-त्वादन्यांश्चान्नादवद्वाचा वदनक्रियया ग्रहीतुमुपादातुं स प्रथमजः शरीरी यद्यदि हैनद्वाचाऽग्रहीष्यद्गृहीतवान् स्या-

---

व्या॰ शरीरान्तर्गतं प्रविष्टं किन्तु बहिरेव स्थितमित्यर्थः । कार्य्य-करणलक्षणः पिण्डस्तदन्नं वाचा जिघृक्षदित्यन्वयः । नन्विदानी-मिव प्रथममेवापानेनैवान्नजिघृक्षा तस्य किमिति नासीदि-त्याशङ्क्य तस्येदानीन्तनशरीरापेक्षया प्रथमजत्वादिति व्यव-हारापेक्षयेत्यर्थः । यस्मिन् प्रतिष्ठिता [illegible] व्यष्टिशरीरस्य समष्टिपिण्डापेक्षया प्रथमजत्वाभावादप्रथम-जातमित्यर्थः । वदनक्रियया प्रथमजस्य पिण्डस्य कारणस्यासम-र्थ्यासामर्थ्यं कार्य्यगतासामर्थ्येन तत् गमयति । स प्रथमज इति । यत्र प्रथममग्रपदं गृहीतवान् स्यादित्यत्र कर्म्मत्वेन सम्बध्यते । तत्कार्य्यभूतत्वादिति तदन्नकारणभूतत्वादित्यर्थः । इ-दानीन्तनशरीरस्य पूर्व्वकालीनव्यष्टिशरीरकार्य्यत्वाभावादिति

ऐ॰उ॰ तत्त्वचाऽजिघृक्षत् तन्नाशक्नोत् त्वचा ग्रहीतुं। स यद्धैनत् त्वचाऽग्रहैष्यत् स्पृष्ट्वा हैवान्नमत्रप्स्यत् ॥७॥ तन्मनसाऽजिघृक्षत् तन्नाशक्नोन्मनसा ग्रहीतुं। स यद्धैनन्मनसाग्रहैष्यद्ध्यात्वा हैवान्नमत्रप्स्यत् ॥ ८ ॥ तच्छिश्नेनाजिघृक्षत् तन्नाशक्नोच्छिश्नेन ग्रहीतुं। स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत् ॥ ९ ॥ तदपानेनाजिघृक्षत् तदावयत्। स एषोऽन्नस्य ग्रहो यद्वायुरन्नायुर्वा एष यद्वायुः ॥ १० ॥

ऐ॰भा॰ सर्वोऽपि लोकस्तत्कार्यभूतत्वादन्नमभिव्याहृत्यैवात्रप्स्यत् तृप्तोऽभविष्यत् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

न चैतदन्नतो नाशक्नोत् पूर्वजोऽपि वाचा ग्रहीतुमित्यवगच्छामः पूर्वेण समानमुत्तरं तत्प्राणेन तच्चक्षुषा तच्छ्रोत्रेण तत्त्वचा तन्मनसा तच्छिश्नेन तेन करणव्यापारेणान्नं ग्रहीतुमशक्नुवन् पश्चादपानेन वायुना मुखच्छिद्रेण तदन्नमजिघृक्षत् तदावयत्तदन्नमेवं जग्राहाशितवान् । तेन स एषो न वायुरन्नस्य ग्रहोऽन्नग्राहक इत्येतत् । यद्वायुर्यो

व्या॰ अभिव्याहृत्येति वाचकशब्देनाभिधायेत्यर्थः । पूर्वजोऽपीत्यस्य नाशक्नोदिति पूर्वेणान्वयः ॥ ३ । ४ । ५ । ६ ॥

प्राणेन घ्राणेनाभिप्राणनव्यापारेणेत्यर्थः । अपानेनेति मुखच्छिद्रेणान्तर्गच्छता वायुनेत्यर्थः । अन्नायुरन्नमपि श्वसनवृत्तिमतः प्राणस्य धर्मो नातोऽन्नः स्तुत इत्येतत् । तदेतत् सूत्रं पराञ्चि इत्यादिनोक्तं । अस्य सन्दर्भस्य प्रयोजनमुपसंहरति । तेन वा एष इति । येन कारणेनापानेनान्नमशितवान् तेनेत्यर्थः । अपानवृत्तिमतः प्राणस्यान्नग्राहकत्वप्रसिद्धा अदीकर्तुमशक्नुवन्निति नान्यं लभते । अथा-

ऐ॰उ॰ स ईक्षत कथं न्विदं मदृते स्यादिति स

ऐ॰भा॰ वायुः अन्नायुरन्नबन्धनोऽन्नजीवनो वै प्रसिद्धं स एष यो वायुः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

स एवं लोकलोकपालसङ्घातस्थितिमन्ननिमित्तां कृत्वा पुरपौरतत्पालयितृस्थितिसमां स्वामीव ईक्षत। कथं नु केन प्रकारेणेति वितर्कयन्निदं मदृते मामन्तरेण पुरस्वामिनम्। यदिदं कार्यकरणसङ्घातं कार्यं वक्ष्यमाणं कथं नु खलु मामन्तरेण स्यात् परार्थं सत् यदि वाचाऽभिव्याहृतमित्यादि केवलमेव वाग्व्यवहरणादि

व्या॰ पुरिति। अन्नमदामीत्यादिष्वक्षरे प्रायस्यान्नायुष्ट्वं प्रसिद्धमित्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

एवं भोगाधिकरणभूतानां भोक्तॄणां भोगायतनस्य समष्टिव्यष्टिशरीरस्य भोगोपकरणानां वागादीनां समष्टिशरीरे लोकपालत्वेन व्यष्टिशरीरे करणाधिष्ठातृत्वेन च स्थितानां देवतानां भोगे प्रेरकयोरशनायापिपासयोस्तत्प्रयुक्तस्य करणनिवहस्य शब्दादिविषयग्रहणव्यवहारस्य भोगस्याप्यन्नसृष्टिमत् प्राणनिष्ठत्वाभिमानप्रवणत्वस्य च भोगस्यात्मनः संसारित्वसिद्ध्यर्थं सृष्टिमभिधायेदानीं संसारिणां भोक्तारं दर्शयितुं स्रष्टुरीश्वरस्य विचारांशं दर्शयितुं स ईक्षतेति वाक्यं व्याचष्टे। स एवमिति। पत्युः पौराणां पुरवासिनां तत्पालयितॄणां राजनियुक्ताधिकारिणां स्थितिसमां तत्तुल्यामन्ननिमित्तां स्वाधीनां सृष्ट्वा स्थितिं कृत्वेत्यन्वयः। कृत्वेत्युपलक्षणं लोकादीन् सृष्ट्वेत्यपि द्रष्टव्यं पदार्थानुक्त्वा वाक्यार्थमाह। यदिदमिति। वक्ष्यमाणमिति वाचाभिव्याहृतमित्यादिना। वक्ष्यमाणमभिव्याहरणादिकमित्यर्थः। हेतुगर्भितमिदंशब्दार्थस्य विशेषणं परार्थं सदिति परार्थत्वात् परार्थिनां मामृते कथं स्यादित्यस्यैवार्थस्य कथं शब्दसूचितं व्यति-

ऐ॰उ॰ ईक्षत कतरेण प्रपद्या इति । स ईक्षत यदि

ऐ॰भा॰ तन्निरर्थकं न कथञ्चन भवेत्। बलिस्तुत्यादिवत् पौरवन्द्यादिभिः प्रयुज्यमानं स्वाम्यर्थं सत्तत्स्वामिनमन्तरेणासत्येव स्वामिनि तद्वत् । तस्मान्मया परेण स्वामिनाधिष्ठात्रा कृताकृतफलसाक्षिभूतेन भोक्त्रा भवितव्यं पुरस्येव राज्ञा । यदि नामैतत्संहतकार्य्यस्य परार्थत्वं परार्थिनश्चेतनमन्तरेण भवेत् पुरपौरकार्य्यमिव तत्स्वामिनमन्तरे-

आ॰ रेणमाह । यदीति । केवलं भोक्त्रर्थितया वागव्याहरणादि यत्तत् कथञ्चन भवेत् कथञ्चिदपि न भवेदित्यन्वयः। तत्र हेतुर्निरर्थकमिति अर्थयितृरहितमित्यर्थः। तदाह । अर्थयिता पुरुषस्तद्रहितमित्यर्थः। अर्थयिता हि पुरुषः स्वस्य प्रयोजनसिद्ध्यर्थं वागादिकं प्रेरयति। तदभावे प्रेरकाभावाद्वाग्व्यवहारादिकं न भवेदित्यर्थः। यद्वा अर्थः प्रयोजनमर्थिनोऽभावे स्वस्यार्थत्वाभावान्निष्प्रयोजनं यत् तन्न भवेत्। प्रयोजनप्रयुक्तत्वात् सर्व्वप्रवृत्तेरिति। तत्र दृष्टान्तो बलिस्तुत्यादिवदिति। एतदेव विवृणोति। पौरेति। अत्र यथाशब्दो द्रष्टव्यः। यथा पौरादिभिः प्रयुज्यमानं बलिस्तुत्यादिकं स्वामिनमन्तरेण न भवेत् तद्वदित्यन्वयः। स्वामिनमन्तरेणेत्यस्य व्याख्यानमसत्येवेति। विचारस्य फलमाह। तस्मादिति। परेणा-र्थादन्येन स्वामिना अर्थिना वागादिव्यवहारफलोपकारभाजा अधिष्ठात्रा वागादिप्रेरकं सन्निधानतत्परायत्तान्नचेतनस्य स-न्निधानमात्रमेव साक्षितया न व्यापार इत्याह। कृतेति। कृताकृतयोरुपलक्षणस्य चेत्यर्थः। फलसाक्षित्वमेव भोक्तृत्वमपीत्याह। भोक्त्रेति। राज्ञ इत्यस्येति पदाध्याहारेणेति ईक्षतेति पूर्व्वेणान्वयः। एवं वाग्व्यवहारादिकार्य्यसिद्ध्यर्थं मया प्रवेष्टव्यमित्युक्त्वाऽऽत्मस्वरूपबोधार्थञ्च मया प्रवेष्टव्यमिति वक्तुं स ईक्षत यदि वाचाभिव्याहृतमित्याद्यथ कोऽहमित्यन्तं वाक्यं तत्प्रवेशप्रयोजनकथनार्थत्वेन कथं न्विदमिति वाक्यतुल्यत्वात् स ईक्षत कतरेणेति वाक्येन व्यवहितसम्बन्धेनाकृष्य व्याचष्टे। यदि

ऐ॰उ॰ वाचाभिव्याहृतं यदि प्राणेनाभिप्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचा स्पृष्टं

ऐ॰भा॰ स्याच्च कोऽयं किंस्वरूपः कस्य वा स्वामी यद्यहं कार्य्यकारणसङ्घातमनुप्रविश्य वागाद्यभिव्याहृतादिफलं नोपलभेयं। राजेव पुरमाविश्याधिकृतपुरुषकृताकृतावेक्षणं। न कश्चिन्मामयं यन्नेवंरूपस्येत्यधिगच्छेद्विचारयेत्। विपर्य्यये तु योऽयं वागाद्यभिव्याहृतादीदमिति वेद स सन्निति संवेदनरूपस्येत्यधिगम्योऽहं स्यां यदर्थमिदं संहतानां वागादीनामभिव्याहृतादि। यथा स्तम्भकुड्यादीनां प्रासादादिसंहतानां स्वावयवैरसंहतपरार्थत्वं तद्वदित्येवमीक्षि-

---

आ॰ नामेति। संहतस्य वागादिकार्यस्य कार्य्यस्य परार्थत्वं परोपकारकत्वमभिव्याहरणादिकारित्वं परार्थित्वमुपकारभाजनमन्तरेण भवेदित्यर्थः। अनेन यदि वाचैव केवलयाभिव्याहृतं भवेदित्येवमादावध्याहारेण वाक्यं योजितं। एवमुत्तरत्रापि यदि प्राणेनैवाभिप्राणितं भवेदित्यादि द्रष्टव्यं। अभिप्राणितमाघ्रातं अभ्यप्राणितं अन्तर्गतं भक्षितमित्यर्थः। उक्तमेव वाक्यार्थं स्पष्टीकरोति। स्याच्चमित्यादिना। अयं सन्निति अयमात्माऽस्ति स एवंरूपश्चेति नाधिगच्छेदित्यर्थः। अप्रवेशे स्वस्याधिगमो न स्यादित्युक्त्वा प्रवेशे तु सोऽस्तीति प्रवेशप्रयोजनमाह। विपर्य्यये त्विति। प्रविश्य अभिव्याहृताद्युपलम्भे त्वित्यर्थः। वेदनरूपः संवेत्त्यधिगन्तव्योऽहं स्यामित्यन्वयः। वेदनरूपत्वमुपपादयति। योऽयमिति। योऽयं वागाद्यभिव्याहृतादि वेद स वेदनरूप इत्यधिगन्तव्यः स्यामित्यन्वयः। न च वेदितुः कथं वेदनरूपत्वमिति वाच्यं। वेदितुरवेदनरूपत्वे तस्य वेदनान्तरकर्मत्वं वाच्यं। तस्मिन् वेदने वेदितैव कर्त्ता। चेदेकस्मिन् वेदितरि कर्तृत्वं कर्मत्वञ्च विरुद्धं प्रसज्येत। अन्यो वेदिता कर्त्ता चेत् तस्याप्यन्यो वेदितेत्यनवस्था स्यादिति वेदितुर्वेदनरूपत्वं सिध्यति अत एव श्रुत्यन्तरे यो वेदेदं जिघ्राणीति।

ऐ०उ० यदि मनसा ध्यातं यद्यपानेनाभ्यपानितं
यदि शिश्नेन विसृष्टमथ कोऽहमिति ॥ ११ ॥

---

ऐ०भा०त्वाऽतः कतरेण प्रपद्या इति। प्रपदञ्च मूर्द्धा चास्य सङ्घा-तस्य प्रवेशमार्गावनयोः कतरेण मार्गेणेदं कार्य्यकारणस-ङ्घातलक्षणं पुरं प्रपद्ये प्रपद्येयमित्येवमीक्षित्वा न तावन्मा-भृत्यप्राणस्य मम सर्व्वार्थाधिकृतस्य प्रवेशमार्गप्रपदाभ्याम-धःप्रपद्ये किन्तर्हि पारिशेष्यादस्य मूर्द्धानं विदार्य्य प्रप-द्येयमिति ॥ ११ ॥

---

व्या० स यतेति प्राज्ञस्येव प्राणवेदनस्यात्मत्वमुक्तमिति भावः ॥ तस्य वेद-नरूपत्वे प्रमाणमुक्त्वाऽस्मिन्ने प्रमाणमाह। यदर्थमिति ॥ संहतानां वागादीनामभिव्याहृतादि यदर्थं सोऽन्यो वागादिभिरसंहतः संवेदधिगन्तव्य इति पूर्व्वेणान्वयः ॥ संहतानामसंहतपदार्थत्वे दृष्टान्तमाह। यथेति। एतदुक्तं भवति। वागाद्यभिव्याहृतादि चासंहतपदार्थं भवितुमर्हति संहतत्वात् कुड्यादिप्रासादा-दिवदेति तदादित्यनन्तरं श्रुतिगतं स ईक्षतेति पदं द्रष्टव्यं। भाष्ये तु स्पष्टतया व्यस्तं प्रयोजनद्वयवशात् प्रवेशस्य वर्णयिष्यते चिन्ते प्रवेशद्वारस्य विचारस्यावसर इति। इदानीं स ईक्षत कतरे-णेति वाक्यं व्याचष्टे। एवमीक्षित्वेति। अत इति यतः प्रवेशस्य वागादिव्यवहारसिद्धिर्मोक्षरूपबोधश्चेति प्रयोजनद्वयसिद्ध्यर्थं कर्त्तव्यत्वमत इत्यर्थः। अन्तादिति पाठे शरीरस्यान्तः प्रपद्ये इत्य-न्वयः ॥ कतरेणेति पदं गृहीत्वा तद्व्याख्यातुं मार्गद्वयं दर्शयति। प्रपदञ्चेति। इदानीं गृहीतं पदं व्याख्याति। अनयोः कतरेणेति ॥ प्रपद्य इत्यनन्तरं श्रौतं स ईक्षतेति पदं द्रष्टव्यं। अनन्तरं स ईक्षत यदि वाचेत्यादिवाक्यं पूर्व्वमेव व्याख्यातमिति तदुत्तरं स एतमेव सीमानमिति वाक्यं व्याख्यातुं तदपेक्षितमाह। एवमीक्षित्वेति ॥ पर्य्यालोच्येत्यर्थः। भृत्यस्य प्रवेशमार्गेण स्वामिनः प्रवेशोऽनुचित इत्यनेनैव मार्गेण प्रवेशं निषिध्यमानमित्याह। न तावदिति ॥ अ-स्येति पिण्डस्येत्यर्थः। प्रपद्येयमित्यनन्तरं निश्चित्येति शेषः ॥ ११ ॥

ऐ॰उ॰ स एतमेव सीमानं विदार्य्यैतया द्वारा प्रा-

ऐ॰भा॰ लोक इवेक्षितकारी य ईश्वरः स्रष्टा एतमेव मूर्द्ध-सीमानं केशविभागावसानं विदार्य्य छिद्रं कृत्वा एतया द्वारा मार्गेणेमं लोकं कार्य्यकारणसङ्घातं प्रापद्यत प्रविवेश। सेयं हि प्रसिद्धा द्वाः। मूर्द्धनि तैलादिधारणकाले तद्रसादिसंवेदनात् सैषा विदृतिर्विदारितत्वाद्विदृतिर्नाम प्रसिद्धा द्वाः। इतराणि तु श्रोत्रादिद्वाराणि भृत्यादिस्थानीयसाधारणमार्गत्वान्न समृद्धीनि नानन्दहेतूनि इदन्तु द्वारं परमेश्वरस्यैव केवलस्येति। तदेतन्नान्दनं नन्दनमेव नान्दनमिति दैर्घ्यं छान्दसं। नन्दत्यनेन द्वारेण गत्वा परस्मिन् ब्रह्मणीति तस्यैव स्रष्टा प्रविष्टस्य जीवेना-

---

आ॰ एवमपेक्षितमुक्त्वा स एतमिति वाक्यं व्याचष्टे। लोक इवेति॥ एवमीक्षित्वा मूर्द्धानं विदार्य्य प्रपद्येयमिति निश्चित्येमं सङ्घातं प्रापद्यत इत्यन्वयः। ननु नव वै पुरुषे प्राणाः। सप्त वै शीर्षण्याः प्राणाः द्वाववाञ्चौ। नवद्वारे पुरे देहीत्यादिषु द्वारनवकं प्रसिद्धं न तु मूर्द्धनि द्वारान्तरमित्याशङ्क्य प्रत्यक्षवत्तयोर्दमायत्वमस्तत्वमे-हीति श्रुतिरस्य तस्य प्रसिद्धेर्वमिति वक्तुं सैषेति वाक्यं। तद्व्याचष्टे। सेयमिति॥ प्रत्यक्षतः प्रसिद्धिं सैषेति पदाभ्यां दर्शयति। मूर्द्धनीति॥ मूर्द्धनि शिरः विपच्छद्वैलादिधारणकाले तिक्तादि-तद्रससंवेदनं इष्यत इति सा द्वाः प्रत्यक्षतः प्रसिद्धेत्यर्थः। न केवलं द्वारः प्रत्यक्षस्य एव प्रसिद्धिः किन्तु तस्य विदृतिरिति नाम्नापि सिद्धिरित्याह। विदृतिरिति। यनेनेश्वरेण सप्रवेशार्थमसाधारणतया विदारितत्वात् भृत्यस्थानीयचक्षुरादिप्रवेशद्वारैः सप्त नव वै पुरुषे प्राणा इत्यादि पूर्व्वोक्तश्रुतिषु परिगणितमित्युक्तं। श्रौतप्रसिद्धिं वक्तुं तदेतन्नान्दनमिति वाक्यं तथैव देवनान्दनं नान्यानीत्युक्तमिति कृत्वा व्याचष्टे। इतराणि तु इति॥ समृ-

ऐ॰भा॰ त्मना राज्ञ इव स्वं पुरं। त्रय आवसथा जागरितकाले। इन्द्रियस्थानं दक्षिणं चक्षुः। स्वप्नकालेऽन्तर्मनः। सुषुप्तकाले हृदयाकाशमित्येतद्वक्ष्यमाणा वा त्रय आवसथाः। पितृशरीरं मातृगर्भाशयः स्वञ्च शरीरमिति। त्रयः स्वप्नाः जाग्रत्स्वप्नसुषुप्ताख्याः। ननु जागरितं प्रबो-

ष्या॰ ढौकत इति। सत्यादिरानन्दो येषु तानीति विग्रहः। हेतुशब्दं भावप्रधानं स्वीकृत्यानन्दम् प्रति हेतुत्वं येषामिति बहुव्रीहिणा हेतूनीति नपुंसकत्वं द्रष्टव्यं। अन्त्यनेन द्वारेण गतेत्यनेन तयोर्द्ध्वमायन्नमृतत्वमेतीति श्रुतौ प्रसिद्धिर्दर्शिता॥ ईश्वरस्यैवं प्रवेशमुक्त्वा तस्यैव पूर्वोक्तकार्यकरणसङ्घातोपाधिकसंसारमाह। तस्येति॥ एवं पुरं सृष्ट्वा जीवेनात्मना प्रविष्टस्य तस्य राज्ञ इव त्रय आवसथाः क्रीडास्थानानीत्यन्वयः। तान्येवाह। जागरितेति॥ चक्षुरिति चक्षुर्गोलकमित्यर्थः। मन इति मनसोऽधिकरणं कण्ठस्थानमित्यर्थः। कण्ठे स्वप्नं समादिशेदिति श्रुतेः। हृदयाकाश इति हृदयावच्छिन्नभूताकाश इत्यर्थः। यद्यपि ब्रह्मण्येव सुषुप्तौ जीवो वर्तते सता सौम्य तदा सम्पन्न इति श्रुतेस्तथापि ब्रह्मणोऽपि हृदयाकाशेऽवस्थानात्तत्सम्पन्नोऽपि तत्रैव वर्तत इति यथोक्तं। अन्यथा हृदयाकाशशब्देनैव दहराधिकरणन्यायेन ब्रह्माभिधानेन तस्य त्रयः स्वप्ना इति वक्ष्यमाणस्वप्नतुल्यत्वानुपपत्तिरित्यत एव पक्षान्तरमाह। वक्ष्यमाणा वेति॥ तानेवाह। पितृशरीरमिति॥ नन्वात्मा वा इदमेक एवेत्यद्वितीयत्वेनोक्तस्य त्रयमावसथानां योग इत्याशङ्क्य त्रयाणां मायात्वान्न पारमार्थिकाद्वितीयत्वायोग इति वक्तुं त्रयः स्वप्ना इत्युक्तं तद्व्याचष्टे। त्रयः स्वप्ना इति॥ स्वप्नतुल्या इत्यर्थः। जाग्रदित्युपलक्षणं पित्रादिशरीरत्रयस्यापि द्रष्टव्यं। तेषां स्वप्नतुल्यत्वं नास्तीति शङ्कते। नन्विति॥ अत्रापि शरीरत्रयमुपलक्षितं तत्प्रतिबोधस्य स्वप्नप्रबोधतुल्यत्वात् स्वप्नत्वमेवेत्याह। नैवमिति॥ तथा

ऐ०उ० तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथो ऽयमावसथोऽयमावसथ इति ॥ १२ ॥

स जातो भूतान्यभिव्यैक्षत् किमिहान्यं वाव-

---

ऐ०भा० धरूपत्वाच्च स्वप्नो नैवं स्वप्न एव। कथं परमार्थस्वात्मप्रबोधाभावात् स्वप्नवदसद्वस्तुदर्शनाच्च। अयमेवावसथश्चक्षुर्दक्षिणं प्रथमः। मन आन्तरं द्वितीयः। हृदयाकाशस्तृतीयः। अयमावसथ इत्युक्तानुकीर्त्तनमेव ॥ १२ ॥

तेषु ह्ययमावसथेषु पर्यायेणात्मभावेन वर्त्तमानोऽविद्यया दीर्घकालं गाढं प्रसुप्तः स्वाभाविक्या न प्रबुध्यते। अनेकशतसहस्रानर्थसन्निपातजदुःखं मुद्गरभिघातानु-

---

आ० प्रसिद्धिर्नास्तीति चेद्दृते। कथमिति। अविवेकिनां तथा प्रसिद्ध्यभावेऽपि विवेकिनां तत्स्वप्नत्वप्रसिद्धिरस्तीत्याह। परमार्थेति। वस्तुतत्त्वतिरोधानेनासद्वस्तुप्रतिभासः स्वप्न इति लक्षणं जागरितमपि तथाभूतमेव। ब्रह्मस्वरूपतिरोधानादविद्यमानजगत्प्रतीतेश्चेत्यर्थः। आन्तरं यन्मनस्तत् द्वितीय आवसथ इत्यन्वयः। अयमावसथ इत्यादिनाऽर्थान्तरं नोच्यते। प्रासादभूमिकावदुपर्यधोभावेन स्थित इव चक्षुरादयोऽङ्गुल्या निर्दिश्य प्रदर्श्यन्ते नाद्यावसथत्रयातिरिक्तत्वायेत्याह। अयमावसथ इति। उक्तानुकीर्त्तनमेवेति। १२।

नन्वावसथशब्दस्य गृहविशेषवाचिनः कथमक्ष्यादिषु प्रयोग इत्याशङ्क्यावसथत्वेषु स्थितस्य दीर्घनिद्रादर्शनात्तेषु सुखसुप्तस्येव प्रतिप्रबोधदर्शनात् गौण्या वृत्त्याऽऽवसथत्वमाह। तेषु ह्ययमिति। स्वाभाविक्या विद्ययेत्यन्वयः। अनुभवैरित्यनन्तरमित्यंते आवसथा इत्युच्यन्ते इति शेषः। ननु जागरितादिकं भूतकार्यस्य कार्यकरणसङ्घातस्य धर्मो न त्वात्मनः। सत्यं तस्यापि तत्संघाततादात्म्याभिमानात्तद्धर्मवत्त्वमिति वक्तुं स जात इति वाक्यं

ऐ०उ० दिषदिति । स एतमेव पुरुषं ब्रह्म तत-
ममपश्यदिदमदर्शमिति ॥ १३ ॥

---

ऐ०भा० भ्रमैरपि स कदाचित् परमकारुणिकेनाचार्य्येणात्मज्ञा-
नप्रबोधकृच्छब्दकर्थ्यां वेदान्तमहाभेर्य्यां तत्कर्णमूले ताड्य-
मानायाम् स एतमेव सृष्ट्यादिकर्तृत्वेन प्रकृतं पुरुषं पुरि श-
यानमात्मानं ब्रह्म बृहत्ततमं तकारेणैकेन लुप्तेन तत-
मं व्याप्ततमं परिपूर्णमाकाशवत् प्रबुध्यत अपश्यत् । कथ-

---

व्या० तदाचष्टे । स जात इति ॥ भूतान्येवाभिमुख्येन तादात्म्येन व्याक-
रोत् व्यक्तं ज्ञातवानुक्तवांश्च । मनुष्योऽहं काणोऽहं सुखदुःख्यहमित्या-
दिप्रकारेणेत्यर्थः । तथा च श्रुत्यन्तरं । अनेन जीवेनात्मनानुप्रविश्य
नामरूपे व्याकरवाणीति । ननु व्यतिरिक्तात्मज्ञाने सति कथमुक्त-
तादात्म्यभ्रम इत्याशङ्क्याह श्रुतिः । किमिहान्यमिति ॥ इहा-
स्मिन् शरीरेऽन्यं व्यतिरिक्तमात्मानं वावदिषत् किमिति काका मो-
क्षार्थमित्यर्थः । न ज्ञातवानित्यपि द्रष्टव्यं । इतिशब्दो यस्मादित्यर्थे ।
यस्मादेवं तस्मादभिव्यैख्यदिति व्यवहितेनान्वयः प्रकरणसमाप्त्यर्थो वा । इदं
वाक्यं भाष्यकारैः स्पष्टत्वादुपेक्षितं लेखकदोषात् पतितं वा ॥ एव-
मध्यारोपं प्रदर्श्य तदपवादार्थं स एतमित्यादिवाक्यं व्याचष्टे ।
स कदाचिदित्यादिना ॥ यद्वा स जात इत्यादिरपवादः । तस्मिन्
पक्षे एवं योजना । भूतानि व्याकरोत् विविच्याकरोत् । किमेषां
स्वतः सत्तास्ति न वेति विचारितवानित्यर्थः । विचार्य च किम-
त्रात्मव्यतिरिक्तं स्वतः सत्ताकं वावदिषद्वदिष्यामि न किञ्चिद-
प्यात्मव्यतिरिक्तं वक्तुं शक्नोमीति निश्चितवानित्यर्थः ॥ एवं पदा-
र्थशोधनवतो वाक्यार्थज्ञानमाह । स एतमिति ॥ आचार्य्यवान्
पुरुषो वेदेति श्रुतेः ॥ तेन विना स्वतो वाक्यार्थज्ञानं न सम्भवती-
त्यभिप्रेत्याह । परमिति ॥ वेदान्तेति ॥ उपनिषल्लक्षणस्य समुदा-
यस्य भेरीस्थानत्वं तद्गतानां तत्त्वमसीत्यादिवाक्यानां प्रबोधजन-
कशब्दत्वमिति शेषः । पुरि शयनमिति मूर्द्धन्यया द्वारा प्रविश्येति

ऐ०उ० तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिद-
न्द्रं सन्तमिन्द्रमित्याचक्षते परोक्षेण। परोक्षप्रिया
इव हि देवाः। परोक्षप्रिया इव हि देवाः ॥
१४ ॥ इति तृतीयः खण्डः ॥ ३ ॥ इत्यैतरेये
द्वितीये आरण्यके चतुर्थोऽध्यायः ॥ उपनिषत्सु
प्रथमोऽध्यायः ॥ १ ॥ ॐ तत् सत् ॥

---

ऐ०भा० मिदं ब्रह्म ममात्मनः स्वरूपमदर्शं दृष्टवानस्मि। अहो
इति विचारणार्था प्लुतिः। यस्मादिदमित्येव। यस्मात्साक्षाद-
परोक्षाद्ब्रह्म सर्वान्तरमपश्यन्नपरोक्षेण ॥ १३ ॥

तस्मादिदं पश्यतीति इदन्द्रो नाम परमात्मा। इद-
न्द्रो ह वै नाम प्रसिद्धो लोके ईश्वरः। तमेवं इदन्द्रं। सन्तं
परोक्षाभिधानेनाचक्षते ब्रह्मविदः संव्यवहारार्थं पूज्यतम-
त्वात् प्रत्यक्षनामग्रहणभयात्। तथा हि परोक्षप्रियाः परो-

---

था० ष्टवः। प्लुतेरपि केन सहान्वयः। किं परोक्षतया ज्ञातमिति
पृच्छति। यथेति। तस्य ज्ञानप्रकाशकेन वाक्येन तस्यापरो-
क्षत्वमाह। इदमिति। इतीति प्लुतेरर्थमाह। अहो इति। वि-
चारणार्थमिति विचारणार्थप्लुतेर्विहितत्वात् श्रुत्या सम्यग्ब्रह्म
ज्ञातं न वेति विचार्य सम्यग्ज्ञातमिति निश्चित्याहो इति स्वस्य
कृतार्थत्वं प्रख्यापितवानित्यर्थः। १३।

तस्येदन्द्रनामप्रसिद्धावपि तस्य ज्ञानस्याऽपरोक्षत्वमिति वक्तुं
तस्मादिदन्द्र इति वाक्यं। तद्व्याचष्टे। यस्मादिति। यस्मात् सर्वा-
न्तरं ब्रह्म इदमित्यपरोक्षं प्रत्यगात्मत्वेनाऽपश्यदित्यन्वयः। कथ-
मिदन्द्रनामत्वमत आह। इदन्द्रो ह वा इति। नन्विन्द्रो मायाभि-
रित्यादाविन्द्रप्रसिद्धेर्न त्विदन्द्र इत्यत आह। तमेवमिति। इद-
न्द्रस्यैव सतः परोक्षत्वार्थं अक्षरलोपेनेन्द्र इत्याचक्षत इत्यर्थः। परो-

ऐ॰भा॰ चनामग्रहणप्रिया इव ह्येव हि यस्माद्देवाः। किमु सर्व्वदेवानामपि देवो महेश्वरः। द्विर्व्वचनं प्रकृताध्यायपरिसमाप्त्यर्थं॥ इत्यैतरेयोपनिषद्भाष्ये प्रथमोऽध्यायः॥१॥ ॐ तत् सत्॥

अस्मिन्नध्याये एष वाक्यार्थः। जगदुत्पत्तिस्थितिलयकृदसंसारी सर्व्वज्ञः सर्व्वशक्तिः सर्व्ववित् सर्व्वमिदं जगत् स्वतोऽन्यद्वस्त्वन्तरमनुपादायैवाकाशादिक्रमेण सृष्ट्वा स्वात्मप्रबोधनार्थं सर्व्वाणि च प्राणादिमच्छरीराणि स्वयं प्रविवेश। प्रविश्य च स्वमात्मानं यथा भूतमिदं ब्रह्मास्मीति साक्षात् प्रत्यबुध्यत। तस्मात् स एव सर्व्वशरीरेष्वेक

---

आ॰ परोक्षे प्रयोजनमाह। पूज्येति। पूज्यानां परोक्षतयैव नाम वक्तव्यमित्यत्र प्रमाणमाह। तथा हीति। देवा इति पूज्या इत्यर्थः॥ अत एवाचार्या उपाध्याया इत्युक्तावेव प्रीतिं कुर्व्वन्ति लोके न तु विष्णुमित्रादिनामग्रहणे इति भावः। नाम्नः परोक्षत्वं नाम यथार्थनाम्नो रूपान्तरकरणेन स्वरूपाच्छादनमिति ज्ञेयं। इत्यैतरेयोपनिषद्भाष्यटीकायां प्रथमोऽध्यायः॥१॥ ॐ तत् सत्॥

अस्मिन्नध्याये आत्मैकत्वलोकपालसृष्ट्यशनायापिपासासंयोजनादीनां बहूनामर्थानामुक्तत्वात् सर्व्वेषामपि विवक्षितत्वभ्रान्तिवारणाय विवक्षितमर्थमाह। अस्मिन्निति॥ सर्व्वेष्वपि प्रदेशेष्वेक एवात्मा स एव परमेश्वर इति वक्ष्यमाणोऽयं एतच्छब्दार्थः। वाक्यार्थ इति विवक्षित इति शेषः॥ कथमयमेवार्थो विवक्षित इत्याशङ्क्य पूर्व्वसन्दर्भपर्य्यालोचनयेत्याह। जगदित्यादिना॥ यद्यपि लोकादिसृष्टिरेवाम्नाता नोत्पत्तिस्थित्योरुक्ति तथाप्युत्पत्तिस्थित्युक्त्याऽर्थात् प्रलयोऽप्युक्तप्राय इति। अयच्छादित्युक्ते शोकपापादीनामेव भोक्तृत्वोक्त्या असंसारीत्युक्तमित्यर्थः॥ सामान्यतः सर्व्वं जानातीति सर्व्वज्ञः। विशेषतः सर्व्वप्रकारेणापि सर्व्वं जानातीति सर्व्ववित्॥ स्वतोऽन्यदित्यन्तेन जगतस्तत्कार्य्यत्वात्तद्व्यतिरेकेण नास्तीत्युक्ता प्रत्यगात्मनस्तदभेदमाह। स्वात्मेति॥ न केवलं प्रवे-

ऐ॰ भा॰ एवात्मा नान्य इति। अन्योऽपि मम आत्मा ब्रह्मास्मी-त्येवं विद्यादिति आत्मा वा इदमेक एवाग्र आसीद्ब्रह्म ततमिति चोक्तः। अन्यत्र चासर्वगतस्य सर्वात्मनो वाला-ग्रमात्रमप्यप्रविष्टं नास्तीति कथं सीमानं विदार्य प्रापद्यत पिपीलिकेव सुषिरं। नन्वत्यल्पमिदं चोद्यं बहु चात्र चो-दितव्यं। अकरणः सन्नीक्षत अनुपादाय किञ्चिल्लोकानसृ-जत अद्भ्यः पुरुषं समुद्धृत्यामूर्छयत्। तस्याभिध्यानान्मुखा-दि निर्भिन्नं मुखादिभ्यश्चाग्न्यादयो लोकपालास्तेषां चाश-नायादिसंयोजनं तदायतनप्रार्थनं तदर्थं गवादिप्रदर्शनं तेषां च यथायतनं प्रवेशनं सृष्टस्यान्नस्य पलायनं वागा-

---

टी॰ लोकस्यैव तदभेदः किन्तु तदभेदज्ञानोक्तेश्चेत्याह। प्रविश्य चेति। प्रत्यगुक्तश्चेति। यस्मात् सर्वशरीरेष्वेकस्यैव प्रवेश उक्तः। यस्माच्च प्रविष्टस्य प्रत्यक्तया ज्ञानमुक्तं तस्मात् सर्वशरीरेष्वेक एवात्मा स च सर्वज्ञ ईश्वर एव नान्य इत्येष वाक्यार्थो विवक्षित इति पूर्वेणान्वयः। मम आत्मेति विद्यादिति संहितोपनिषद्गत-वाक्यशेषोऽप्येतमेवार्थमाहेत्याह। अन्योऽपीति। मम इति सर्वभूतेष्वेक इत्यर्थः। स ईक्षतेत्यादिसन्दर्भादयमर्थः प्रतीयत इत्युक्तं पूर्वं इदानीमुपक्रमोपसंहाराभ्यामप्येष एवार्थः प्रतीयत इत्याह। आत्मा वा इति। सदेव सोम्येदमग्र आसीत् तदेतद्ब्रह्मा-पूर्वमित्यादौ चाद्वितीयत्वमुक्तमित्याह। अन्यत्र चेति। प्रवेशवा-क्यादात्मन एकत्वमुक्तं तदयुक्तं तस्यैवासङ्गतार्थत्वादिति शङ्कते सर्वगतस्येति। [illegible]दार्ष्टिकत्वं सर्वगतत्वात् प्रवेशश्च न सङ्गच्छत इत्यर्थः। [illegible] प्रवेशमात्रार्थे सङ्गतत्वमुक्त विवक्षितार्थे। श्रुते सर्वस्याप्यसङ्गतार्थत्वेन सर्वस्याप्यप्रामाण्यं स्यात्। न च वेद-स्य तद्युक्तमित्याह। नन्विति। चक्षुरादिकरणैरीक्षणं प्रसिद्धं मृदा-द्युपादानवत एव सृष्टत्वं हस्ताभ्यामेव समुद्धरणसंमूर्च्छने इत्यश-रीरस्य तदसङ्गतं शस्त्रादिना मूर्धानं विदारणं च अमूर्तानां मुखा-

श्वे॰उ॰नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वा पुनः ॥ २२ ॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।

श्वे॰भा॰पादितलक्षणाह । वेदान्त इति॥ वेदान्त इति-आत्यैकवचनं । सकलास्वपनिषत्सु परं परमपुरुषार्थस्वरूपं गुह्यं गोप्यानामपि गोप्यतमं पुराकल्पे प्रचोदितं पूर्वकल्पे चोदितमुद्दिष्टमिति सम्प्रदायप्रदर्शनं कृतमिति। एतत् प्रशान्ताय पुत्राय प्रकर्षेण शान्तं सकलरागादिमलरहितचित्तं यस्य तस्मै तादृशपुत्राय तादृशशिष्याय वा दातव्यं वक्तव्यमिति यावत् । तद्विपरीतायाशिष्याय वा स्नेहादिना ब्रह्मविद्या न वक्तव्या। अन्यथा प्रत्यवायापत्तेरिति पुनःशब्दार्थः । अत एव ब्रह्मविद्याविदुषा गुरुणा चिरकालं परीक्ष्य शिष्यगुणान् ज्ञात्वा ब्रह्मविद्या वक्तव्येति भावः॥ तथा च श्रुतिः । भूय एव तपसा ब्रह्मचर्य्येण श्रद्धया संवत्सरं परीक्षेत । श्रुत्यन्तरे च । शतं वर्षं प्रजापतौ मघवान् ब्रह्मचर्य्यमुवासेति च । एतच्च बहुधा प्रपञ्चितमुपदेशसहस्रिकायामित्यत्र सङ्कोचः कृतः॥ २२ ॥

अथापि देवतागुरुभक्तिमतामेव गुरुणा प्रकाशिता विद्या ऽनुभवाय भवतीति प्रदर्शयति ।। यस्येति ॥ यस्य पुरुषस्याधिकारिणो देवे द्युतिमता स्वरूपेण दर्शिताऽखण्डैकरसे सच्चिदानन्दपरज्योतिःस्वरूपिणि परमेश्वरे परा

श्वे॰उ॰ तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः प्रकाशन्ते महात्मनः ॥ २३ ॥ इति श्वेताश्वतरोपनिषत्सु षष्ठोऽध्यायः ॥ ॐ तत् सत् ॐ ॥

---

श्वे॰भा॰ उत्कृष्टा निरुपचरिता भक्तिः । एतदुपलक्षणं । श्रवणाख्यं श्रद्धा चोभे यथा तथा ब्रह्मविद्योपदेष्टृगुरावपि तदुभयं यस्य वर्त्तते तस्य नष्टाग्निरसो जठराग्न्यन्वेषणं विहाय यथा साधनान्तरं नास्ति । यथा च बुभुक्षितस्य भोजनादन्यत्र साधनान्तरं न । एवं गुरुकृपां विहाय ब्रह्मविद्या दुर्लभेति तदन्वितस्य मुख्याधिकारिणो महात्मन उत्तमस्य एते कथिता अर्थाः श्वेताश्वतरोपनिषदि श्वेताश्वतरेण महात्मना कविना उपदिष्टाः प्रकाशन्ते स्वानुभवाय भवन्ति । द्विर्वचनं मुख्यशिष्यतत्साधनादिदुर्लभप्रदर्शनार्थमध्यायपरिसमाप्त्यर्थमादरार्थञ्च ॥ २३ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीशङ्करभगवतः कृतौ श्वेताश्वतरोपनिषद्भाष्ये षष्ठोऽध्यायः ॥ ॐ तत्सत् हरिः ॐ ॥

इति श्वेताश्वतरोपनिषत् समाप्ता ॥

---

